॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१६७



॥ श्रीः ॥

नव्यरोगनिदानम्

नाम

# माधवनिदान-परिशिष्टम्

भिषग्रत्न—

श्रीब्रह्मशङ्करशर्मणा

सम्पादितम् ।








प्रकाशकः—

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस ।

१९४४ ]   मूल्यं ॥=)   [ २००१

## हमारे निज प्रकाशित वैद्यक ग्रन्थाः—

१ अभिनव-बूटीदर्पण-सचित्र। अनुभूत प्रयोग सहित ६)
२ अष्टाङ्गहृदय-भागीरथी बृहद् टिप्पणी सहित-गुटका २॥)
३ आयुर्वेदीयपरिभाषा-'प्रकाशिका' भा॰ टी॰ नूतन परिशिष्ट सहित ।॥)
४ काकचण्डीश्वरकल्पतन्त्र-प्राचीनग्रन्थ ॥=)
५ कामसूत्र-जयमङ्गलरचित टीका सहित (कामशास्त्र) ५॥)
६ चरकसंहिता-भागीरथी बृहद् टिप्पणी सहित-गुटका ४)
७ चक्रदत्त-भावार्थसन्दीपिनी भाषाटीका टिप्पणी परिशिष्ट सहित ६)
८ माधवनिदान-सुधालहरी टीका नूतन संयोजित परिशिष्ट सहित १॥)
९ नाड़ीविज्ञान-विबोधिनी भाषा टीका सहित ≡)
१० निघण्टुसारसंग्रह-भावप्रकाशनिघण्टुरूप परिशिष्टसहित १)
११ पंचसायक-नर्मकेलिकौतुकसंवाद-(कामशास्त्र) १)
१२ भावप्रकाश-मूल संपूर्ण। ६)
१३ भावप्रकाश-मूल-पूर्वखण्ड-निघण्टुसारसंग्रहनामक विवरण सहित ३)
१४ भावप्रकाश-संपूर्ण-विद्योतिनी भाषा टीका विवरण परिशिष्ट सहित १६)
१५ भावप्रकाश-ज्वराधिकार " " " " " १।)
१६ भावप्रकाशनिघण्टु-आमयिकप्रयोगादि विवरण सहित २)
१७ भावप्रकाशनिघण्टु-निघण्टुसारसंग्रह विशिष्ट विवरण सहित १।)
१८ योगरत्नाकर-नवीन॰ गुटका संस्करण ३)
१९ रसरत्नसमुच्चय-सटिप्पण गुटका संस्करण ३)
२० रसरत्नसमुच्चय-सुरत्नोज्ज्वला भाषा टीका टिप्पणी परिशिष्ट सहित ९)
२१ रसाध्याय-सटीक ॥=)
२२ रसार्णवं नाम रसतन्त्रम्। भागीरथी टिप्पणी सहित २)
२३ रसेन्द्रसारसंग्रह-बालबोधिनी भागीरथी टिप्पणी सहित १।)
२४ रसेन्द्रसारसंग्रह-सचित्र-गूढार्थसन्दीपिका-संस्कृत टीका सहित ३।)
२५ रसेन्द्रसारसंग्रह-सचित्र-रसचन्द्रिका भा.टी. विमर्श परिशिष्ट सहित २॥)
२६ रसायनखण्ड-रसरत्नाकर का चतुर्थखण्ड ॥)
२७ रतिरत्नप्रदीपिका (कामशास्त्र) १)
२८ सुश्रुत-शारीरस्थानं दर्पण-प्रभा भाषा टीका द्वयोपेतम् १।।)
२९ वैद्यजीवनम्-सुधा भाषा टीका टिप्पणी सहित ॥=)
३० शार्ङ्गधरसंहिता-सुबोधिनी भाषा टीका टिप्पणीपरिशिष्ट सहित ३॥)
३१ सुश्रुतसंहिता-सुधा संस्कृत टीका सहित ५)

---

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।

.........२॥

श्रीगौरकृष्णः शरणं ममास्तु ।

## नव्यरोगनिदानम्

नाम

# माधवनिदान-परिशिष्टम् ।

---

लोकव्याधिसदाधिकृन्तनविधौ सिद्धं हरिं माधवं-
नत्वा माधवशर्मणा निगदिते ग्रन्थे निदानस्य वै ।
प्रवूते परिशिष्टरूपत इहाक्लिष्टैः सुपद्यैः स्फुटं-
नूलानूलतरान् सदैव भिषजां दृग्गोचरानामयान् ॥१॥
श्रीव्राजमोहनिरयं व्रजराजभक्तो-
दामोदराङ्घ्रिरसिकोऽपि च मिश्रवंशयः ।
सत्पङ्क्तिपावनमहीसुरगौतमोत्थः-
सन् ब्रह्मशङ्कर उमाधवकाशिकास्थः ॥ २ ॥
मिश्रौलियाऽऽवसथवासिजनो मुदाऽऽदा
तत्रानवाञ्ज्वरगदान् विलिखत्यनुक्तान् ।
श्रीश्रेष्ठिवर्यजयकृष्णपदादिदास-
प्रोत्साहितस्त्वितरतन्त्रत आकलय्य ॥ ३ ॥

### अथ सामान्यसन्निपातज्वरस्य त्रयोदशभेदाः ।

एकोल्वणास्त्रयस्तेषु द्व्युल्वणाश्च तथेति षट् ।
त्र्युल्वणश्च भवेदेको विज्ञेयः स तु सप्तमः ॥ १ ॥
प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च षट्
सन्निपातज्वरस्यैवं स्युर्विशेषास्




प्रवृद्धवातो मध्यपित्तो हीनकफः १ ।
मध्यवातः प्रवृद्धपित्तो हीनकफः २ ।
हीनवातः प्रवृद्धपित्तो मध्यकफः ३ ।
प्रवृद्धवातो हीनपित्तो मध्यकफः ४ ।

मध्यवातो हीनपित्तः प्रवृद्धकफः ५ ।
हीनवातो मध्यपित्तः प्रवृद्धकफः ६ । इति षट् ।

अथानुक्रमेण त्रयोदशसंनिपातनामानि—

विस्फारकश्चाशुकारी कम्पनो बभ्रसंज्ञकः ।
शीघ्रकारी तथा भल्लुः सप्तमः कूटपाकलः ॥ ३ ॥
संमोहकः पाकलश्च याम्यः क्रकच इत्यपि ।
ततः कर्कटकः प्रोक्तस्ततो वैदारिकाभिधः ॥ ४ ॥

तन्त्रान्तरे 'विस्फारक' इत्यत्र 'विस्फोरक' इति पाठः । 'बभ्र' स्थाने 'बभ्रु' रिति पाठः । 'भल्लु' रित्यत्र 'फल्गु' रिति पाठः । 'याम्य' इत्यत्र 'संग्राम' इति पाठः । 'कर्कटक' इत्यत्र 'कर्कोटक' इति पाठः ।

१ तत्र वातोल्वणविस्फारकलक्षणम्—

श्वासः कासो भ्रमो मूर्च्छा प्रलापो मोहवेपथू ।
पार्श्वस्य वेदना जृम्भा कषायत्वं मुखस्य च ॥ ५ ॥
वातोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत् ।
एष विस्फारको नाम्ना संनिपातः सुदारुणः ॥ ६ ॥

२ पित्तोल्वणाशुकारिलक्षणम्—

अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च ।
गात्रे च बिन्दवो रक्ता दाहोऽतीव प्रजायते ॥ ७ ॥
पित्तोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत् ।
भिषग्भिः संनिपातोऽयमाशुकारी प्रकीर्त्तितः ॥ ८ ॥

३ कफोल्वणकम्पनलक्षणम्—

जडता गद्गदा वाणी रात्रौ निद्रा भवत्यपि ।
प्रस्तब्धे नयने चैव मुखमाधुर्यमेव च ॥ ९ ॥
कफोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत् ।
मुनिभिः संनिपातोऽयमुक्तः कम्पनसंज्ञकः ॥ १० ॥

४ वातपित्तोल्वणबभ्रलक्षणम्—

वातपित्ताधिको यस्तु संनिपातः प्रकुप्यति ।
तस्य ज्वरो मदस्तृष्णा मुखशोषः प्रमीलकः ॥ ११ ॥
आध्मानारतितन्द्राश्च कासश्वासभ्रमश्रमाः ।
मुनिभिर्बभ्रनामाऽयं सन्निपात उदाहृतः ॥ १२ ॥

५ वातकफोल्वणशीघ्रकारिलक्षणम्—

वातश्लेष्माधिको यस्य संनिपातः प्रकुप्यति ।
तस्य शीतज्वरो मूर्च्छा क्षुत्तृष्णा पार्श्वनिग्रहः ॥ १३ ॥
शूलमस्विद्यमानस्य तन्द्रा श्वासश्च जायते ।
असाध्यः संनिपातोऽयं शीघ्रकारीति कथ्यते ।
न हि जीवत्यहोरात्रमनेनाविष्टविग्रहः ॥ १४ ॥

६ पित्तकफोल्वणभल्लुलक्षणम्—

पित्तश्लेष्माधिको यस्य संनिपातः प्रकुप्यति ।
अन्तर्दाहो बहिः शीतं तस्य तृष्णा प्रवर्द्धते ॥ १५ ॥
तुद्यते दक्षिणे पार्श्वं उरःशीर्षगलग्रहः ।
ष्ठीवति श्लेष्मपित्तं च कृच्छ्रात्कोठश्च जायते ॥ १६ ॥
विड्भेदश्वासहिक्काश्च बर्द्धन्ते सप्रमीलकाः ।
ऋषिभिर्भल्लनामाऽयं संनिपात उदाहृतः ॥ १७ ॥

७ वातपित्तकफोल्वणकूटपाकललक्षणम्—

सर्वदोषोल्वणो यस्य संनिपातः प्रकुप्यति ।
त्रयाणामपि दोषाणां तस्य रूपाणि लक्षयेत् ॥ १८ ॥
व्याधिभ्यो दारुणश्चैव वज्रशस्त्राग्निसंनिभः ।
केवलोच्छ्वासपरमः स्तब्धाङ्गः स्तब्धलोचनः ॥ १९ ॥
त्रिरात्रात्परमेतस्य जन्तोर्हरति जीवितम् ।
तदवस्थन्तु तं दृष्ट्वा मूढो व्याहरते जनः ॥ २० ॥
धर्षितो राक्षसैर्नूनमवेलायां चरन्ति ये ।
अम्बया ब्रुवते केचिद् यक्षण्या ब्रह्मराक्षसैः ॥ २१ ॥
पिशाचैर्गुह्यकैश्चैव तथाऽन्यैर्मस्तके हतम् ।
कुलदेवार्चनाहीनं धर्षितं कुलदैवतैः ॥ २२ ॥
नक्षत्रपीडामपरे गरकर्मेति चापरे ।
संनिपातमिमं प्राहुर्भिषजः कूटपाकलम् ॥ २३ ॥

८ अधिकवातमध्यपित्तहीनकफसंमोहकलक्षणम्—

प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ २४ ॥
प्रलापायाससंमोह-कम्पमूर्च्छाऽरतिभ्रमाः ।

एकपक्षाभिघातश्च तत्राप्येते विशेषतः ॥ २५ ॥
एष संमोहको नाम्ना सन्निपातः सुदारुणः ॥ २६ ॥

रोगास्त एवोक्ताः=व्यथावेपथुनिद्रानाशविष्टम्भादयो वातजाः। दाहतृष्णोष्णतास्वेदादयः पित्तजाः। गौरवाग्निमान्द्योत्कासनासिकामुखप्रसेकादयः कफजाः। तत्रापि प्रलापादयः पक्षघातान्ता विशेषाद्भवन्ति।

९ मध्यवाताधिकपित्तहीनकफपाकललक्षणम्—

मध्यप्रवृद्धहीनैस्तु वातपित्तकफैश्च यः।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ २७ ॥
मोहप्रलापमूर्च्छाः स्युर्मन्यास्तम्भः शिरोग्रहः।
कासः श्वासो भ्रमस्तन्द्रा संज्ञानाशो हृदि व्यथा ॥२८॥
खेभ्यो रक्तं विसृजति सरक्तस्तब्धनेत्रता।
तत्राप्येते विशेषाः स्युर्मृत्युरर्वाक् त्रिवासरात्।
भिषग्भिः सन्निपातोऽयं कथितः पाकलाभिधः ॥ २९ ॥

१० हीनवाताधिकपित्तमध्यकफयाम्यलक्षणम्—

हीनप्रवृद्धमध्यैस्तु वातपित्तकफैश्च यः।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ ३० ॥
हृदयं दह्यते चास्य यकृत्प्लीहान्त्रफुप्फुसाः।
पच्यन्तेऽत्यर्थमूर्ध्वाधः पूयशोणितनिर्गमः ॥ ३१ ॥
शीर्णदन्तश्च मृत्युश्च तत्राप्येतद्विशेषतः।
भिषग्भिः सन्निपातोऽयं याम्यो नाम्ना प्रकीर्त्तितः ॥ ३२ ॥

११ अधिकवातहीनपित्तमध्यकफक्रकचलक्षणम्—

प्रवृद्धहीनमध्यैस्तु वातपित्तकफैश्च यः।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ ३३ ॥
प्रलापायाससंमोहाः कम्पमूर्च्छाऽरतिभ्रमाः।
मन्यास्तम्भेन मृत्युः स्यात्तत्राप्येतद्विशेषतः ॥ ३४ ॥
भिषग्भिः सन्निपातोऽयं क्रकचः संप्रकीर्त्तितः ॥ ३५ ॥

१२ मध्यवातहीनपित्तमध्यकफकर्कटकलक्षणम्—

मध्यहीनाप्रवृद्धैस्तु वातपित्तकफैश्च यः।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ ३६ ॥

अन्तर्दाहो विशेषोऽत्र न च वक्तुं स शक्यते ।
रक्तमालक्तकेनैव लक्ष्यते मुखमण्डलम् ॥ ३७ ॥
पित्तेनाकर्षितः श्लेष्मा हृदयान्न प्रसिच्यते ।
इषुणेवाहतं पार्श्वं तुद्यते खन्यते हृदि ॥ ३८ ॥
प्रमीलकश्वासहिक्का वर्द्धन्ते तु दिने दिने ।
जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः ॥ ३९ ॥
विसर्गं नाभिजानाति कूजेच्चापि कपोतवत् ।
अतीव श्लेष्मणा पूर्णः शुष्कवक्त्रौष्ठतालुकः ॥ ४० ॥
तन्द्रानिद्राऽतियोगार्त्तो हतवाङ् निहतद्युतिः ।
अरतिं लभते नित्यं विपरीतानि चेच्छति ॥ ४१ ॥
आयम्यते च बहुशो रक्तं ष्ठीवति चाल्पशः ।
एष कर्कटको नाम्ना सन्निपातः सुदारुणः ॥ ४२ ॥

१३ हीनवातमध्यपित्ताधिककफवैदारिकलक्षणम्—

हीनमध्यप्रवृद्धैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ ४३ ॥
अल्पशूलं कटीतोदो मध्ये दाहो रुजा भ्रमः ।
भ्रशं क्लमः शिरोवस्तिमन्याहृदयवाग्रुजः ॥४४॥
प्रमीलकः श्वासकासहिक्काजाड्यविसंज्ञताः ।
प्रथमोत्पन्नमेनन्तु साधयन्ति कदा चन ॥ ४५ ॥
एतस्मिन् सन्निवृत्ते तु कर्णमूले सुदारुणा ।
पिडका जायते जन्तोर्यया कृच्छ्रेण जीवति ॥ ४६ ॥
स वैदारिकसंज्ञोऽयं सन्निपातः सुदारुणः ।
त्रिरात्रात्परमेतस्य व्यर्थमौषधकल्पनम् ॥ ४७ ॥

---

## अथ पूर्वोक्तत्रयोदशसन्निपातज्वरविशेषाणां तन्त्रान्तरस्थनामानि ।

शीताङ्गाभिमलोद्भवज्वरगणे तन्द्री प्रलापी ततो-
रक्तष्ठीवयिता च तत्र गणितः सम्भुग्ननेत्रस्तथा ।
साभिन्यासकजिह्वकश्च कथितः प्राक्सन्धिगोऽथान्तको-
रुग्दाहः सहचित्तविभ्रम इह द्वौ कर्णकण्ठग्रहौ ॥ ४८ ॥

तन्द्री=तन्द्रिकः, प्रलापी=प्रलापकः, रक्तष्ठीवयिता=रक्तष्ठीवी, संभुग्ननेत्रः=भुग्ननेत्रः, अभिन्यासकः=अभिन्यासः, कर्णकण्ठग्रहौ=कर्णग्रहः (कर्णिकः), कण्ठग्रहः=(कण्ठकुब्जक) इत्येत्यत्र बोध्यम् ।

अथ तेषां प्रत्येकं लक्षणानि ।

१ तत्र शीताङ्गस्य लक्षणम्—

हिमशिशिरशरीरः सन्निपातज्वरी यः श्वसनकसनहिक्कामोहकम्पप्रलापैः ।
क्लमबहुकफवातैर्दाहवम्यङ्गपीडा स्वरविकृतिभिरार्त्तः शीतगात्रः स उक्तः ॥४९

२ तन्द्रिकस्य लक्षणम्—

तन्द्राऽतीव ततस्तृषाऽतिसरणं श्वासोऽधिकः कासरुक्
संतप्ताऽतितनुर्गले श्वयथुना सार्द्धञ्च कण्डूः कफः ।
सुश्यामा रसना क्लमः श्रवणयोर्मान्द्यञ्च दाहस्तथा
यत्र स्यात् स हि तन्द्रिको निगदितो दोषत्रयोत्थो ज्वरः ॥९०॥

३ प्रलापकस्य लक्षणम्—

यत्र ज्वरे निखिलदोषनितान्तरोष-जाते प्रलापबहुलाः सहसोत्थिताश्च ।
कम्पव्यथापतनदाहविसंज्ञताः स्युर्नाम्ना प्रलापत इति प्रथितः पृथिव्याम्

४ रक्तष्ठीविनो लक्षणम्—

निष्ठीवो रुधिरस्य रक्तसदृशं कृष्णं तनौ मण्डलं-
लौहित्यं नयने तृषाऽरुचिवमिश्वासातिसारश्रमाः ।
आध्मानं च विसंज्ञता च पतनं हिक्काऽङ्गपीडा भृशं-
रक्तष्ठीविनि संनिपातजनिते लिङ्गं ज्वरे जायते ॥ ९२ ॥

५ भुग्ननेत्रस्य लक्षणम्—

भृशं नयनवक्रता श्वसनकासतन्द्रा भृशम्-
प्रलापमदवेपथुश्रवणहानिमोहास्तथा ।
पुरो निखिलदोषजे भवति यत्र लिङ्गं ज्वरे
पुरातनचिकित्सकैः स इह भुग्ननेत्रो मतः ॥ ९३ ॥

६ अभिन्यासस्य लक्षणम्—

दोषास्तीव्रतरा भवन्ति बलिनः सर्वेऽपि यत्र ज्वरे
मोहोऽतीव विचेष्टता विकलता श्वासो भृशं मूकता ।
दाहश्चिक्कणमाननञ्च दहनो मन्दो बलस्य क्षयः-
सोऽभिन्यास इति प्रकीर्त्तित इह प्राज्ञैर्भिषग्भिः पुरा ॥९४॥

७ जिह्वकस्य लक्षणम्—

त्रिदोषजनिते ज्वरे भवति यत्र जिह्वा भृशं-
वृता कठिनकण्टकैस्तदनु निर्भरं मूकता ।

श्रुतिक्षतिबलक्षतिश्वसनकाससन्तप्तताः-
पुरातनभिषग्वरास्तमिह जिह्वकं चक्षते ॥ ६६ ॥

८ सन्धिगस्य लक्षणम्—

व्यथाऽतिशयिता भवेच्छ्वयथुसंयुता सन्धिषु
प्रभूतकफता मुखे विगतनिद्रता कासरुक् ।
समस्तमिति कीर्त्तितं भवति लक्ष्म यत्र ज्वरे-
स्त्रिदोषजनिते बुधैः स हि निगद्यते सन्धिगः ॥ ६६ ॥

९ अन्तकस्य लक्षणम्—

यस्मिल्लक्षणमेतदस्ति सकलैर्दोषरुदीते ज्वरे-
ऽजस्रं मूर्द्धविधूननं सकसनं सर्वाङ्गपीडाऽधिका ।
हिक्काकाससदाहमोहसहिता देहेऽतिसन्तप्तता-
वैकल्यञ्च वृथावचांसि मुनिभिः संकीर्त्तितः सोऽन्तकः ॥९७॥

१० रुग्दाहस्य लक्षणम्—

दाहोऽधिको भवति यत्र तृषा च तीव्रा
श्वासप्रलापविरुचिभ्रममोहपीडाः ।
मन्याहनुव्यथनकण्ठरुजः श्रमश्च
रुग्दाहसंज्ञ उदितस्त्रिभवो ज्वरेऽयम् ॥ ९८ ॥

११ चित्तभ्रमस्य लक्षणम्—

गायति नृत्यति हसति प्रलपति विकृतं निरीक्षते मुह्येत् ।
दाहव्यथाभयार्त्तो नरस्तु चित्तभ्रमे ज्वरे भवति ॥ ९९ ॥

१२ कर्णिकस्य लक्षणम्—

दोषत्रयेण जनितः किल कर्णमूले
तीव्रा ज्वरे भवति तु श्वयथुर्व्यथा च ।
कण्ठग्रहो बधिरता श्वसनं प्रलापः-
प्रस्वेदमोहदहनानि च कर्णिकाख्ये ॥ ६० ॥

१३ कण्ठकुब्जस्य लक्षणम्—

कण्ठः शूकशतावरुद्धवदतिश्वासः प्रलापोऽरुचि-
र्दाहो देहरुजा तृषाऽपि च हनुस्तम्भः शिरोऽर्त्तिस्तथा ।
मोहो वेपथुना सहेति सकलं लिङ्गं त्रिदोषज्वरे
यत्रस्यात् स हि कण्ठकुब्ज उदितः प्राच्यैश्चिकित्साबुधैः ॥६१॥

अथ संनिपातज्वरस्यासाध्यासाध्यत्वम्—

सन्धिगस्तेषु साध्यः स्यात् तन्द्रिकश्चित्तविभ्रमः ।
कर्णिको जिह्वकः कण्ठ–कुब्जः पञ्चापि कष्टदाः ॥ ६२ ॥
रुग्दाहस्त्वतिकष्टेन संसाध्यस्त्वेषु भाषितः ।
रक्तष्ठीवी भुग्ननेत्रः शीतगात्रः प्रलापकः ।
अभिन्यासोऽन्तकश्चैते षडसाध्याः प्रकीर्त्तिताः ॥ ६३ ॥

---

## अथान्यग्रन्थोक्तवातोल्वणादित्रयोदशसन्निपातानां कुम्भीपाकादीनि नामानि ।

कुम्भीपाकः प्रोर्णुनावः प्रलापी ह्यन्तर्दाहो दण्डपातोऽन्तकश्च ।
एणीदाहश्चाथ हारिद्रसंज्ञो भेदा एते सन्निपात ज्वरस्य ॥ ६४ ॥
अजघोषभूतहासौ यन्त्रापीडश्च संन्यासः ।
संशोषी च विशेषास्तस्यैवोक्तास्त्रयोदशान्यत्र ॥ ६५ ॥

अथैषां लक्षणानि ।

१ तत्र कुम्भीपाकस्य लक्षणम्—

घोणाविवरझरद्बहु–शोणासितलोहितं सान्द्रम् ।
विलुठन्मस्तकमभितः कुम्भीपाकेन पीडितं विद्यात् ॥ ६६ ॥

२ प्रोर्णुनावस्य लक्षणम्—

उत्क्षिप्य यः स्वमङ्गं क्षिपत्यधस्तान्नितान्तमुच्छ्वसिति ।
तं प्रोर्णुनावजुष्टं विचित्रकष्टं विजानीयात् ॥ ६७ ॥

३ प्रलापिनो लक्षणम्—

स्वेदभ्रमाङ्गभेदाः कम्पो दवथुर्वमिव्यथा कण्ठे ।
गात्रञ्च गुर्वतीव प्रलापि जुष्टस्य जायते लिङ्गम् ॥ ६८ ॥

४ अन्तर्दाहस्य लक्षणम्—

अन्तर्दाहः शैत्यं बहिः श्वयथुररतिरति तथा श्वासः ।
अङ्गमपि दग्धकल्पं सोऽन्तर्दाहार्दितः कथितः ॥ ६९ ॥

५ दण्डपातस्य लक्षणम्—

नक्तन्दिवा न निद्रा–मुपैति गृह्णाति मूढधीर्नभसः ।
उत्थाय दण्डपाती भ्रमातुरः सर्वतो भ्रमति ॥ ७० ॥

६ अन्तकस्य लक्षणम्—

संपूर्यते शरीरं ग्रन्थिभिरभितस्तथोदरं मरुता ।
श्वासातुरस्य सततं विचेतनस्यान्तकार्त्तस्य ॥ ७१ ॥

७ एणीदाहस्य लक्षणम्—

परिधावतीव गात्रे रुक्पात्रे भुजगपतगहरिणगणः ।
वेपथुमतः सदाहस्यैणीदाहज्वरार्त्तस्य ॥ ७२ ॥

८ हारिद्रस्य लक्षणम्—

यस्यातिपितमङ्गं-नयने सुतरां मलस्ततोऽप्यधिकम् ।
दाहोऽतिशीतता बहि-रस्य स हारिद्रको ज्ञेयः ॥ ७३ ॥

९ अजघोषस्य लक्षणम्—

छगलकसमानगन्धः स्कन्धरुजावान्निरुद्धगलरन्ध्रः ।
अजघोषसन्निपाता-दाताम्राक्षः पुमान् भवति ॥ ७४ ॥

१० भूतहासस्य लक्षणम्—

शब्दादीनधिगच्छति न स्वान् विषयान् यदिन्द्रियग्रामैः ।
हसति प्रलपति पुरुषं स ज्ञेयो भूतहासार्त्तः ॥ ७५ ॥

११ यन्त्रापीडस्य लक्षणम्—

येन मुहुर्ज्वरवेगाद् यन्त्रेणेवावपीड्यते गात्रम् ।
रक्तं पित्तञ्च वमेद् यन्त्रापीडः स विज्ञेयः ॥ ७६ ॥

१२ संन्यासस्य लक्षणम्—

अतिसरति वमति कूजति गात्राण्यभितश्चिरं नरः क्षिपति ।
संन्याससन्निपाते प्रलपत्युग्राक्षिमण्डलो भवति ॥ ७७ ॥

१३ संशोषिणो लक्षणम्—

मेचकवपुरतिमेचक-लोचनयुगलो मलोत्सर्गात् ।
संशोषिणि सितपिडका-मण्डलयुक्तो ज्वरे नरो भवति ॥७८॥

सन्निपातज्वरस्य भयङ्करता—

नारायण एव भिषग्-भेषजमेतेषु जाह्नवीनीरम् ।
भैषज्यहेतुरेको नित्यं मृत्युञ्जयो ध्येयः ॥ ७९ ॥

सन्निपातज्वरस्य साध्यासाध्यत्वम्—

सन्निपातज्वरान् कष्टा-नसाध्यानपरे जगुः ।
दोषे प्रवृद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ॥
सन्निपातज्वरोऽसाध्यः कष्टसाध्यस्त्वतोऽन्यथा ॥ ८० ॥

# अथ मन्थरकज्वरनिदानम् ।

इत आरभ्यते सम्प्रत्याधुनिकैश्चिकित्सकैः ।
अनुभूतं रोगवृन्दं सनिदानं ज्वरादिकम् ॥

तत्रादौ मन्थरकज्वरनिदानम्—

बह्वब्दवक्रान्ततनवस्तथाऽनशनकर्षिताः ।
दुर्गन्धपूर्णभूमौ वा नित्यमेव निवासिनः ॥ १ ॥
यद्यप्येषां मलोन्मिश्र-भक्ष्यपानादिसेवनात् ।
भवेद्दतुषु सर्वेषु घोरो मन्थरको ज्वरः ॥ २ ॥
तथाऽपि बहुशो लोके ग्रीष्मप्रावृट्शरत्स्वसौ ।
भीमलक्षणसंयुक्तो लक्ष्यते वैद्यसत्तमैः ॥ ३ ॥
आन्त्रिकेत्यभिधानं चा-परमस्यैव कथ्यते ।
सामान्यं कारणं प्रोक्तं विशिष्टं तु निगद्यते ॥ ४ ॥
कीटाणवो "बैसिलस-टाइफोसिस" नामकाः ।
दण्डाकाराः कृतवासा रक्ते मूत्राशये मले ॥ ५ ॥
स्वेदे पित्ताशये प्लीह्नि पिडकास्वान्त्रिकव्रणे ।
जनयन्ति नृणां देहे ज्वरं प्रोक्तं विशेषतः ॥ ६ ॥

मन्थरकज्वरस्य सम्प्राप्तिः—

मलमूत्रस्वेदजात-दोषसंसर्गदूषितैः ।
भक्ष्यपेयादिभिर्द्रव्यै-र्नानासंक्रमकारणैः ॥ ७ ॥
कीटाणवः संक्रमणं प्रकुर्वन्ति विशेषतः ।
कृत्वा संक्रमणं नृणा-मादावन्त्रं प्रयान्ति ते ॥ ८ ॥
तत्पश्चादन्त्रभित्तिस्थान् ग्रन्थीञ् छोथसमन्वितान् ।
कृत्वा सद्यो रसं रक्तं-दोषान् संक्षोपयन्त्यपि ॥ ९ ॥
ततः क्षुद्रान्त्रान्त्यभागाञ्-शनैः कुर्वन्ति सक्षतान् ।
पश्चादान्त्रक्षतानां च वृद्धिः संजायते क्रमात् ॥ १० ॥
तया क्षुद्रान्त्रभागस्थं क्षतं तत्पारगं भवेत् ।
ततः शोथत्वमाप्नोति चोदरस्था कला ध्रुवम् ॥ ११ ॥

एवं रीत्या क्षते वृद्धे पुरीषोत्सर्जने क्वचित् ।
लक्ष्येत यदि रक्तस्य स्रावो भिन्नान्त्रता तदा ।
ज्ञातव्या भिषजा चापि नूनं तस्याप्यसाध्यता ॥ १२ ॥

मन्थरकज्वरस्य पूर्वरूपम्—

शिरोव्यथा स्यादरुचिस्ततोऽरति-
स्तमोऽवसादोऽपि च विड्विबद्धता ।
सप्ताहपर्यन्तमिति स्फुटास्फुटं
ज्वरेऽग्ररूपं नियतं सदाऽऽन्त्रिके ॥१३॥

मन्थरकज्वरस्य रूपम्—

तदग्ररूपं च ततोऽष्टमेऽहनि-
भवेदभिव्यक्तिमवाप्य लक्षणम् ।
ज्वरोऽथ नित्यं क्रमतः प्रवर्द्धते
सहापरैर्मन्थरकेऽत्र लक्षणैः ॥१४॥

भवेत्तदा तु ज्वरतापसीमा चतुर्युतं पञ्चयुतं शतं वा ।
प्लीह्नोऽपि वृद्धिः परिदृश्यतेऽस्मिन्ज्वरे नृणां मन्थरकाभिधाने ॥१५॥

ये भारतीयाः खलु तेषु मुक्ता-
फलोपमाः स्युः पिडका ज्वरेऽस्मिन् ।
लीयन्त उद्भय च तास्तु जङ्घा-
ग्रीवोदरेष्वेव गदस्वभावात् ॥ १६ ॥

किन्त्वाङ्ग्लदेशस्थनरेषु तद्वत्-
पूर्वोदिताङ्गेष्वरुणाश्च ताः स्युः ।
ज्वरेऽत्र जिह्वा मलिनाऽथ रूक्षा-
रक्ताङ्कुरैःस्यात् परितश्चिता च ॥१७॥

एवं क्वचिच्च स्फुटिता तथा चो-दरं सदाऽऽध्मानयुतं निरीक्ष्यते ।
एतेषु चिह्नेषु समुद्भवत्सु प्रागुक्तसीमां लभते ज्वरोऽपि ॥ १८
आद्ये तु सप्ताह इयं दशा स्या-दथो द्वितीये दिनसप्तके तु )
ज्वरस्तु पूर्वोदितसीमसंस्थः प्रलापतन्द्राकसनप्रमीहैः ॥ १९ ॥

आक्षेपदौर्बल्यमुखप्रशोषा-
ध्मानैररत्या सहितो विशेषात् ।
जिह्वाऽत्र रक्ता परितोऽन्त्यभागे
तथा च मध्ये मलिनाऽथ कर्कशा ॥२०॥

विलोक्यते प्रस्फुटिता च नेत्रे स्तब्धे च तेजोरहिते भवेताम् ।
नाडीगतिर्नातिचलाऽतिताप-श्चिन्ताविहीना वदनाकृतिः स्यात् ॥२१॥
अन्यानि दोषत्रितयोदितानि चिह्नानि चाप्यत्र भवन्ति नूनम् ।
अथो द्वितीये दिनसप्तके तु क्वचिच्चतुर्थे क्रमतो ज्वरोऽयम् ॥ २२ ॥
उपद्रवैः सार्द्धमुपैति रिक्ततां प्रायस्तृतीये तु गते विमुञ्चति ॥ २३ ॥

इत्थं विमुक्तिसमयावधिरान्त्रिकस्य-
सामान्यतो निगदितो भिषजा तु योऽत्र ।
स स्यात् कुपथ्यपरिशीलनतत्परस्य-
द्वैगुण्यभागथ च तत्त्रिगुणोऽपि नूनम् ॥ २४ ॥
उपद्रवसमाधिक्यं सततोऽहितसेविनः ।
जायते तेन नियतं कुपथ्यं यत्नतस्त्यजेत् ॥ २५ ॥

मन्थरकज्वरस्यासाध्यलक्षणम्—

यदा कुपथ्याचरणे रतस्य ज्वरार्दितस्यान्त्रगतो हि यक्ष्मा ।
भवेत्तदा तेन च फुप्फुसद्वयं-ध्रुवं समाक्रान्तमपि प्रदृश्यते ॥२६॥
तथा प्रजातैरितरैरुपद्रवैर्युतोऽयमान्त्रक्षयनामभाग् भवन् ।
असाध्यतां प्राप्य तदा तु जायतां लभेत रोगी बहुयत्नतः क्वचिद् ॥२७॥

यदाऽतिसारोऽधिकतीव्रतापो-
विषाक्तता रक्तविनिर्गमश्च ।
शोथान्विताऽथोदरगा कला स्यात्-
तदाऽप्यसाध्यो गदितो गदोऽयम् ॥२८॥
अन्यानि रूपाणि च यानि पूर्वं-
प्रोक्तानि वैद्यैरपि तानि नूनम् ।
प्राबल्यभीयुर्यदि दैवतः क्वचित्-
तदाऽप्यसाध्यत्वमितो गदो भवेत् ॥ २९ ॥
यदा प्रदृश्येत रुजस्त्वसाध्यता-
चिकित्सकैर्मन्थरकज्वरार्दिते ।
विना चिकित्साऽऽगमसिद्धपाद-
चतुष्टयं स्यान्न तदा तु साध्यता ॥ ३० ॥

इति मन्थरकज्वरनिदानम् ।

## अथाक्षेपकज्वरनिदानम् ।

आक्षेपकज्वरनिरुक्तिः—

यस्मादाक्षिप्यन्ते, प्रायेणाङ्गानि यन्ति संकोचम् ।
घोरो ज्वरश्च संज्ञा-हृदसावाक्षेपकः प्रोक्तः ॥ १ ॥

आक्षेपकज्वरस्य निदानम्—

बहुजनसमवायो यत्र देशे विशेषा-
दथ च यदि सदा स्यात्पांसुधूमप्रसारः ।
नरि रचयति वासं तत्र जीवाणुजातो-
ज्वर इह खलु जाये-तातिदुःखप्रदोऽयम् ॥ २ ॥

तस्य संप्राप्तिः—

पूर्वोक्तहेतोरुदितं विषं हि, मस्तिष्कमूले मनुजस्य यस्य ।
प्रायेण नूनं परितः सुषुम्णा-काण्डं च तच्छादिकलाऽन्तराले
क्रमाल्लसीकामतिपूयतुल्यां-संहत्य दोषान्निखिलान्प्रकोप्य ॥३॥
चेष्टावहनाडिकाव्रजाना-मत्युत्तेजनहेतुतो जनानाम् ।
बद्धाक्षिपदङ्गकानि शाखाः-संकोच्य प्रणिहन्ति चेतनां च ॥ ४ ॥
आक्षेपकगदस्यैषा-संप्राप्तिर्वैद्यनिश्चिता ।
प्रायेणात्र नृणां लोके, जीवितं दुर्लभं भवेत् ॥ ५ ॥

तस्य रूपम्—

उग्रा पीडा जायते यस्य शीर्ष्णि-च्छर्दिः शैत्यं जातु चिद्वेपथुश्च ।
ग्रीवास्तम्भोऽपि प्रसह्याथ शीर्ष-पश्चाद् यत्राकृष्यतेऽह्वाऽऽमये तु ॥६॥
गच्छन्त्यङ्गान्येव संकोचभावं-स्यातां वक्रे चक्षुषी नूनमेव ।
शाखाः स्तब्धाः सन्ति वृद्धिर्ज्वरस्या-जस्रं प्रायो लक्ष्यते स्पष्टतोऽपि॥७॥
तन्द्रा मोहोऽपि प्रलापोऽथ शश्वत्-स्यादाक्षेपो गात्रमध्ये जनानाम् ।
नूनं रक्तश्यावलक्ष्मोद्भवश्च,-नाशो जाये-तेन्द्रियाणां क्रमेण ॥ ८ ॥

आक्षेपकज्वरभवं निखिलं तु चिह्न-
मेतन्मतं सुभिषजां गदितं मयेत्थम् ।

स्याद् यत्र रोगिपुरुषे स मृतो भवेदे-
काहाच्च कश्चिदथवा त्रिदिनादवश्यम् ॥ ९ ॥
एवं क्लिश्यँस्त्रिचतुरदिनान्येव सप्ताहमद्धा
कश्चिद्दाऽसून्नियतिवशतः प्रायशः संजहाति ।
कश्चित् पूर्वार्जितसुकृतितः सच्चिकित्साप्रसङ्गा-
ज्जीवेदाक्षेपकपदयुते-न ज्वरेणार्दितोऽपि ॥ १० ॥

इति माधवनिदानपरिशिष्ट आक्षेपकज्वरनिदानं समाप्तम् ।

---

## अथ दण्डकज्वरनिदानम् ।

तत्रादौ दण्डकज्वरस्य परिचयः—

विशिष्टमशकोद्भवो जगति दण्डकाख्यो ज्वरः
सदाऽस्थिनिचयं नर-स्य परिपीडयन्निर्भरम् ।
स्थितिं मुनिमितान्यहा-नि विदधाति नित्यं तनौ
ततो निगदितो ज्वरो मुनिभिरेष सप्ताहकः ॥ १ ॥
एनं चौङ्ग्यू-फीवरं त्वाङ्ग्लभाषा-विज्ञा वैद्या दण्डकाख्यं ज्वरं च ।
अस्थ्नां नूनं भञ्जनं भूमिमध्ये संभाषन्ते नामधेयैरमीभिः ॥ २ ॥

दण्डकज्वरपूर्वरूपम्—

यदा मानवस्याङ्गमध्येऽङ्गमर्दः-क्लमश्चारुचिर्दृश्यते दैवयोगात् ।
अथोत्क्लेशसादौ तदा दण्डकाख्य-ज्वरस्याग्ररूपं जनैर्वेदितव्यम् ॥३॥

दण्डकज्वररूपम्—

अस्थ्नां सन्धिषु घोरा-दण्डाहननजसमा पीडा ।
क्षिप्रोदयलयशाली-समस्ततनुगोऽपि वीसर्पः ॥ ४ ॥
संचारि सन्धिशूलं-शोथयुतं लक्ष्यते यत्र ।
ज्वरमध्येऽपि च कासः-कण्ठे पीडा प्रतिश्यायः ॥ ५ ॥
पुनरावर्त्तनशीलो-मुञ्चत्यष्टाहतो ज्वरो यत्र ।
सन्धिरुजाश्चिरकालं-सन्ति वदन्ति च दण्डकज्वरं तम् ॥६॥
प्रायो जनपदजन्मा-कफमारुतकोपजातनिजवर्ष्मा ।
बालानामथ जरतां-जातो दारुण उदीरितो वैद्यैः ॥ ७ ॥

इति माधवनिदानपरिशिष्टे दण्डकज्वरनिदानं समाप्तम् ।

---

## अथ कर्णमूलिकज्वरनिदानम् ।

पूर्वं भवेदेकतरे हि पार्श्व-कर्णस्य शोथो ज्वरकृद्रुजावान् ।
ततो द्वितीयेऽनुपदं भिषग्वरै-र्गदः स उक्तो भुवि कर्णमूलिकः ॥१॥
अस्मिन् रोगे कर्णमूलस्थिता वा-जिह्वाऽधःस्था ग्रन्थयोऽधोहनुस्थाः ।
नूनं शूयन्ते ततः पञ्चभिर्वा-षड्भिर्वस्रैरेव शान्तिं प्रयाति ॥ २ ॥
पुंसो भूयो मुष्कयोर्वै रुजाऽथो-शोथो जायेत क्वचिद् योषितस्तु ।
योनौ वक्षोजातयोस्तौ दशाहात्-प्रायःशाम्यन्त्यत्र सर्वे विकाराः ॥३॥
अयं ज्वरो वातकफोद्भवस्तथा-विशेषतो जानपदः प्रदृश्यते ।
प्रवर्त्तते प्रायश एव यूनां-किंवा शिशूनां ननु कर्णमूलिकः ॥ ४ ॥
शीर्षकलायामपि च क्लोम्नि-शोथश्चार्दितमप्यश्यवनि ।
ज्वरे कर्णमूलिकपदवाचि-सद्भिरुपद्रव एषोऽवाचि ॥ ५ ॥

इति माधवनिदानपरिशिष्टे कर्णमूलिकज्वरनिदानं समाप्तम् ।

---

## अथ माल्टाज्वरनिदानम् ।

माल्टाज्वरस्य परिचयः—

ज्वरः प्रागयं माल्टाद्वीपमध्ये-निवासं प्रकुर्वत्सु मर्त्येषु नूनम् ।
अभूल्लब्धनैजोद्भवस्तेन चास्य-प्रसिद्धिर्भवे माल्टासंज्ञयैव ॥१॥

तस्य निदानम्—

गदस्यास्य कीटाणवो बिन्दुतुल्या-कृतिं धारयन्तो रुजाऽऽर्त्तास्वजासु ।
पयस्यालयं स्वे प्रकुर्वन्त एते-विदध्युर्गदार्त्तान् सदा तत्प्रसक्तान् ॥२॥
क्वचिच्चाजमस्येक्ष्यते सन्निमित्तं-मलं वाऽथ मूत्रं च रक्तं हि पित्तम् ।
तथाऽऽबालवृद्धेभ्य एषोऽत्र नूनं-समानां प्रवृत्तिं विधत्तेऽप्यनूनम् ॥३॥

तस्य संप्राप्तिः—

अजादुग्धपानादिना रोगकीटा—णवस्त्वन्नमार्गेण चान्त्रं प्रविष्टाः ।
ततः शोणितं चोपगम्यातिदुष्टं-समुत्पादयन्ति ज्वरं तौ विशिष्टम् ॥४॥
ततश्चोदरस्थां कलामास्थितांस्तान्-लसीकासमुत्पादने सिद्धहस्तान् ।
अपि ग्रन्थिराशीनशेषानवश्यं-स्वयं शूनयन्ति प्रसह्य प्रशस्यम् ॥५॥

माल्टाज्वरस्य रूपम्—

गदे माल्टानामके नाम नूनं-सदाऽऽरोहते स्वैरमुष्णो ज्वरोऽपि ।

शिरोरुक् तथाङ्गमर्दो वमिश्चा-प्यथोत्क्लेश उत्पद्यते रोगिवर्गे ॥६॥
कदाचिद् भवेत्कण्ठदाहः क्वचिच्च-प्रतिश्यायकासप्रकाशोऽप्यवश्यम् ।
प्रवृत्तिः परं स्वेदराशेर्ज्वरस्या-वरोहे सशोथा रुजा सन्धिदेशे ॥७॥
अपि प्लीहवृद्धिस्तथा कोष्ठजाता-महाबद्धता स्याद्धि माल्टाज्वरेऽस्मिन्
प्रभेदाश्चतुःसंख्यकाश्चास्य सद्भि-र्निदानैकविद्भिर्भिषग्भिः प्रदिष्टाः ॥८॥
तत्र प्रभेदो मृदुराद्य उक्तः-साधारणः स्यात्तदनु द्वितीयः ।
ततस्तृतीयो विषमश्चतुर्थो-ज्ञेयः सदा दारुण इत्थमेव ॥९॥

प्लीहाऽभिवृद्धिरुदिता तु मृदौ ज्वरेऽस्मिन्-
साधारणे निखिललक्ष्मसमुद्भवः स्यात् ।
किंचास्य मध्यसमयोऽथ तदैधतेऽद्धा-
भेदे भवेद्धि विषमे विषमाऽपि वेगः ॥१०॥
येन ज्वरस्य हि दशोपसि शान्तरूपा-
मध्येदिनेऽपि च भवेदिह सोग्ररूपा ।
तेनैव तस्य नियतं ननु तापमानं-
संलक्ष्यते गदिनि पञ्चपयुक् छतं वै ॥११॥
सायं ज्वरस्तु सहसा बहुशो जनानां-
प्रस्वेदनिर्गमनतो विलयं प्रयाति ।
एवंविधा ज्वरदशा विषमाऽत्र भेदे-
स्यात् सर्वसंधिषु विशेषरुजाऽपि नूनम् ॥१२॥
उग्रे ज्वरो भवति चोग्रतमः शरीरे-
भूरिप्रचण्डपिडकापरिदर्शनं स्यात् ।
दाहोऽपि फुप्फुसकलागत एव चाती-
सारो विपद्यत इहाशु गदी दशायाम् ॥ १३ ॥

इति माधवनिदानपरिशिष्टे माल्टाज्वरनिदानं समाप्तम् ।

---

## अथ कालज्वरनिदानम् ।

तस्य निदानम्—

आनूपदेशेषु महीजवाष्पात्-प्रायेण नृणां कृमिकारणाच्च ।
कालज्वरः कालसमः किलायं-जायेत तल्लक्षणमुच्यतेऽग्रे ॥१॥

तस्य संप्राप्तिः—

जीवाणवस्त्वस्य गदस्य नूनं-मज्जान्त्रयोर्मुष्कजकोशमध्ये ।
अध्यन्त्रभित्त्यस्थ्न्यधिफुप्फुसं वै-प्रायो यकृत्प्लीहगता वसन्ति ॥२॥
प्लीहा यकृच्चौधत एव नून—मनारतं ते क्षुभिते विशेषात् ।
स्यातां च ते सौत्रिकतन्तुयुक्ते-ज्वरामयेऽस्मिन्ननु कालसंज्ञे ॥३॥

तस्य रूपम्—

गदेऽस्मिञ्ज्वरः पूर्वमेवाविसर्गी-प्रवर्त्तेत यावत्त्रिसप्ताहमद्धा ।
क्वचिद्रोगिमध्येऽधिकं वा ततो वै-सदाऽऽरोहलत्ताऽवरोहैः स्थितः स्यात् ४
विमुच्य कालं किल कं चिदेव-मावर्त्तते रोगिजनेषु भूयः ।
पूर्वोदितैर्लक्ष्मभिरन्वितः सन्-प्रायेण कालज्वर आमयोऽयम् ॥५॥
एवं द्विवारागमनेन नृणां-रक्ताल्पतां प्रत्यहमाचरेच्च ।
स्वेदस्य बाहुल्यमथाङ्गमध्ये-प्रायेण हस्ताङ्घ्रिणि च प्रपीडनम् ॥६॥
ज्वरस्तु मन्दत्वमुपागतस्तदा-भवेत्स्थिरो रोगितनौ सुनिश्चितम् ।
विपाण्डुताऽपि ग्रहणी च कामला-प्रजायते चोर्ध्वगरक्तपित्तम् ॥७॥
तथा क्वचित्स्यादपि रोमकूपिकं-कराङ्घ्रिवक्त्रेऽपि च शोथसंभवः ।
ध्रुवं हि सद्यःफलदं चिकित्सितं-विनाऽमयोऽयं बहुकष्टसाध्यः ॥८॥

कालज्वरोपद्रवाः—

अरोचकच्छर्दियुतं मनुष्यं—क्षीणेन्द्रियं क्षीणबलं तथैव ।
क्षीणामिषं फुफ्फुसदाहयुक्तं-समन्वितं यक्ष्मजलक्ष्मजातैः ॥९॥
प्रवाहिकापीडितमप्यतीसा-राक्रान्तमेवंविधमेव वैद्यः ।
कालज्वरेणार्दितमन्तकस्या-ध्वगं विदित्वा न च तं चिकित्सताम् १०

इति माधवनिदानपरिशिष्टे कालज्वरनिदानं समाप्तम् ।

---

## अथाह्निकज्वरनिदानम् ।

नासापुटाभ्यन्तरगालपरक्त-वर्णो भवेद् यत्र गदे तु शोथः ।
तथा ज्वरो गात्ररुजासमेतः-स आह्निकः श्लेष्मकृतो ज्वरः स्यात्॥१॥

इति माधवनिदानपरिशिष्ट आह्निकज्वरनिदानं समाप्तम् ।

---

## अथ श्लीपदिकज्वरनिदानम् ।

शाखासु मुष्कद्वितयेऽपि रागं-शोथं रुजां चाधिकमेव तन्वन् ।

पक्षान्तभावी बहुशो ज्वरो यो-वैद्यैरिह श्लैपदिकः स्मृतः सः ॥ १ ॥

इति माधवनिदानपरिशिष्टे श्लैपदिकज्वरनिदानं समाप्तम् ।

## औपद्रविकज्वरनिदानम् ।

प्रायेण जीर्णेषु गदेषु सर्व-ष्वपि ग्रहण्यादिषु वै विशेषात् ।
यः संनिपातप्रभवो ज्वरः स्याद्-विद्यात्तमौपद्रविकाभिधं हि ॥१॥

इति माधवनिदानपरिशिष्ट औपद्रविकज्वरनिदानं समाप्तम् ।

## अथ देशान्तरीयज्वरनिदानानि ।

ये रक्तपीतादय एव युद्ध-खातादयोऽनेकविधा ज्वरास्तु ।
देशान्तरेषु प्रविलोक्यमाना-स्ते लक्षणीयाः किल शास्त्रदृष्ट्या ॥१॥
अतो देशकालादिभेदानुसारै-रनेके ज्वरा दृश्यमाना नृलोके ।
विचिन्त्या यथावत्तदीयैः स्वरूपैः-सदा शास्त्रमालोक्य सर्वैः सुवैद्यैः ॥२॥

इति माधवनिदानपरिशिष्टे देशान्तरीयज्वरनिदानानि समाप्तानि ।

## अथ ग्रन्थिकज्वरनिदानम् ।

तस्य परिचयः—

ग्रीवाकक्षावङ्क्षणाद्ये लसीका-ग्रन्थिव्राते शोथरुक्कृज्ज्वरो यः ।
जातो घोरो देशविध्वंसकारी-वैद्यैर्नूनं ग्रन्थिकाख्यः स्मृतः सः॥१॥
दण्डाकारास्तस्य कीटाणवो वै-मूलं प्रोक्तं मूषकोत्था भिषग्भिः ।
तद्भेदास्तु ग्रन्थिकः कीटरक्तः-संदृश्यन्ते फुफ्फुसौकप्रदाही ॥२॥

तस्य निदानम्—

भूम्ना रोगार्त्ताखुभी रोगयुक्त-स्थाने श्वासोच्छ्वासतः स्पर्शतोऽपि ।
सञ्चारेण प्रायशो नग्नपद्भ्यां-संक्रामन्त्येते तु पुंसः पुमांसम् ॥३॥
यदा मूषकस्थायिकीटः कथंचि-न्नरं संदशत्यत्र दंशात्तदानीम् ।
विनिःसृत्य कीटाणवस्तल्लसीका-वहासु प्रकुर्वन्ति संचारमेव ॥४॥
यदा ते ततो यान्ति तद्ग्रन्थिमध्ये-तदा क्षोभमायान्ति तद्ग्रन्थयोऽपि ।
चिकीर्षन्ति नाशं च कीटाणुजस्य-प्रकृत्या विरुद्धस्य नूनं विषस्य ॥५॥
ग्रन्थीनां वै कार्यवृद्धिप्रभावा-दस्मिन् कार्ये जायते तत्प्रवृद्धिः ।
किञ्चोत्पद्येत ज्वरस्तद्विषात्सं-प्राप्तिः प्रोक्ता ग्रन्थिकस्येत्थमस्य ॥६॥

यदा ग्रन्थिमध्ये कदाचिन्न कीटा-णवस्ते विनाशं गता वा भवेयुः ।
तदा कीटरक्तत्वमेव ध्रुवं स्या-दवस्थेयमुग्रा भृशं दारुणाऽपि ॥७॥
न शूनाः स्युरत्र क्वचिद् ग्रन्थयोऽङ्ग-विशेषस्थिताः किन्तु सर्वाङ्गजाता ।
मनागुच्छ्वसेयुः समस्ताः स्वतस्ता-इयं कीटरक्तस्य सम्प्राप्तिरुक्ता ॥८॥
कीटाणवः फुफ्फुसदाहका ये श्लेष्मादिभिस्ते बहिरागतास्तु ।
श्वासायनेनान्यनरस्य चान्त-र्गत्वा भवेयुर्ननु फुफ्फुसप्लुषः ॥९॥
इत्थं त्वियं फुफ्फुसदाहकस्य-ज्वरस्य च ग्रन्थिकनामकस्य ।
सम्प्राप्तिरुक्ता भिषगुत्तमैर्या-सा कष्टदायिन्यसिता सदोग्रा ॥ १० ॥

ग्रन्थिकज्वरस्य पूर्वरूपम्—

व्यथा शीर्ष्णि शैथिल्यमङ्गेषु सादो-मनोदैन्यमुत्क्लेशभक्तारुची च ।
ज्वरोक्तं च सामान्यतः पूर्वरूपं-भवेद् ग्रन्थिकाख्ये ज्वरेऽदोऽग्ररूपम्॥११॥

ग्रन्थिकज्वरस्य रूपम्—

तीव्रज्वरो भवति पूर्वमिह क्वचिद्वा-मन्दः शिरोरुगरती वमनं भ्रमश्च ।
उत्क्लेशगात्रशिथिलत्वतृषाप्रलापा -उन्मादमोहधमनीद्रुतगामिताश्च १२
मूर्च्छा तथा सततदुर्बलताऽथ निद्रा-नाशो नृणां नियतमित्यपि लक्ष्मजातम्।
कक्षाऽऽदिकावयवमध्यलसद्लसीका-ग्रन्थिव्रजस्य परितापनमप्यवश्यम् १३
ततस्तृतीयेऽहनि वा चतुर्थे-ग्रन्थिस्तु दष्टाङ्गसमीपजाता ।
सुतीव्रवेगेन विबर्द्धतेऽद्धा-स्पर्शं न चेषत् सहते तु तत्र ॥ १४ ॥
तस्यां तु पाकोऽपि च पूयपूर्णता-चिरात् प्रजायेत सदैव रोगिषु ।
अक्ष्णोस्तथा स्याच्छ्वसोः प्रसुप्ति-श्चेष्टां न कांचिद्विदधीत रोगी ॥१५॥
अभिन्यासजातानि लिङ्गानि चान्या-न्यपीक्ष्यन्त एवानिशं रोगिवर्गे ।
भृशं कर्कशा दग्धतुल्या रसज्ञा-भवेत्स्वस्तभावं भजन्ती च नाडी ॥१६॥
द्वित्रैस्तथा पञ्चभिरेव षड्भिर्घस्रैः क्वचिद्वा दशभिः कदाचित् ।
सद्यः किलासून् विजहाति रोगी-चिराच्च सिद्ध्यत्यपि तत्र कश्चित् ॥१७॥
भवेद्बाहुजग्रन्थिजातो हि शोथ-स्तथा चात्र पाकः शुभोऽवश्यमेव ।
इदं ग्रन्थिकाख्यज्वरस्याद्यभेद-स्वरूपं यथावद् भिषग्भिः प्रदिष्टम् ॥१८॥

ग्रन्थिकज्वरस्य द्वितीयभेदस्य कीटरक्तस्य स्वरूपम्—

बहुग्रन्थयः कीटरक्ताख्यभेदे-ज्वरे ग्रन्थिके नापि बर्द्धन्त एव ।
भवेत्तत्र रक्तस्य दुष्टिस्तथा च-ज्वरस्यानिशं तीव्रता वै विशेषात् ॥१९॥

गतिर्नाडिकायाश्च दौर्बल्ययुक्ता-गदार्त्तस्य पुंसोऽतितीव्रा सदा स्यात् ।
तथाऽन्यानि संज्ञाप्रणाशादिकानि-त्रिदोषोद्भवानीह चिह्नान्यपि स्युः॥२०॥
गदी संयुतो लक्षणैरेभिरेव-द्रुतं दारुणामप्यवस्थामवाप्य ।
दिनैः पञ्चभिः सप्तभिर्वाऽपि नूनं-यमस्यालयं याति देहं विहाय ॥ २१ ॥
अतः प्रायशोऽसावसाध्यो भिषग्भिः-प्रदिष्टोऽत्र भाग्याद्विमुच्येत कश्चित् ।
इदं कीटरक्ताख्यभेदस्य रूपं-ज्वरे ग्रन्थिके वर्णितं सर्वदैव ॥ २२ ॥

ग्रन्थिकज्वरस्यान्तिमभेदस्य फुप्फुसप्लुपस्य रूपम्—

फुप्फुसप्लुषनामके निर्ग्रन्थिके भेदे भृशं-
श्वासमार्गं नूनमस्मिन्नेव संक्रमते विषम् ।
शीतपूर्वकदारुणज्वर आशु संजायेत हि-
शिरसि शूलमथाङ्गमर्दो भ्रमश्चोत्क्लेशोऽधिमहि ॥२३॥
उरोरुक्कसनादिजान्यन्यानि लिङ्गानि त्विह-
स्युश्च फुप्फुसकूजनं श्वासस्य तीव्रतया सह ।
कर्करायनमथ घनत्वं फुप्फुसे परिदृश्यते-
रक्तनिष्ठीवनमिहेदं लक्ष्मजातं लक्ष्यते ॥२४॥
वैद्यवर्यैरप्यसाध्योऽसौ सदा संभाषितः-
कश्चिदेव हि दैवयोगाज्जीवतीह चिकित्सितः ।
इत्थमत्र हि भेदयुक्तग्रन्थिकज्वरलक्षणं-
सर्वमेव निरूपितं प्रविधाय शास्त्रनिरीक्षणम् ॥ २५ ॥

ग्रन्थिकरोगस्योपद्रवाः—

कासोऽतिसारोऽप्यथ रक्तपित्तं-मूत्रावरोधो वमनं तथैव ।
उपद्रवा ग्रन्थिकनामकेऽस्मिन् ज्वरे त्वमी वैद्यजनैः प्रदिष्टाः ॥२६॥

ग्रन्थिकज्वरस्य साध्यलक्षणम्—

अनेका यदि ग्रन्थयः स्युः प्रजाता-
भवेदाशुपाकित्वमद्धाऽपि तासाम् ।
अथो बालको वा जरन् ग्रन्थिकाख्य-
ज्वरार्त्तस्तदा स्याद् गदोऽयं सुसाध्यः ॥ २७ ॥

ग्रन्थिकज्वरस्यारिष्टलक्षणानि—

सर्वेन्द्रियाणां मनसोऽप्यशेष-व्यापारनाशो यदि वाऽतिसारः ।

अत्युल्वणः स्यात्तु तदा सुवैद्यो-ऽरिष्टं वदेद् ग्रन्थिकपीडितस्य ॥ २८ ॥
ष्ठीवेत् सुसिन्दूरसमोज्ज्वलं चेद्-रक्तं कफेनानुगतं तु रोगी ।
श्वासार्दितः फुप्फुसदाहयुक्त-स्तदाऽत्यसाध्यो नियतं सना स्यात् ॥२९॥
अग्रन्थिके ग्रन्थिकयोग्यलिङ्ग-समुद्भवः स्याद् यदि रोगिमध्ये ।
तदा तु तस्यान्तकसद्मयात्रा-ऽवश्यं भवेदित्यपि वेदितव्या ॥ ३० ॥
ग्रन्थिकज्वरमिमं तु के चन-प्रायशः सुभिषगाहता जनाः ।
क्षुद्ररोगपठिताग्निरोहिणी-नामकामयमुदाहरन्ति वै ॥ ३१ ॥

इति माधवनिदानपरिशिष्टे ग्रन्थिकज्वरनिदानं समाप्तम् ।

---

## अथ वातश्लैष्मिकज्वरनिदानम् ।

तत्र वातश्लैष्मिकज्वरस्य परिचयः—

यतः श्लेष्मजोपद्रवाः प्रायशोऽत्रो-द्भवन्ति त्रिदोषोत्थचिह्नैः सहाद्धा ।
भवेन्मुख्यता मारुतस्य स्मृतोऽसौ ज्वरः श्लेष्मको देशविध्वंसकारी ॥१॥
अयमागन्तुकरोगः-पूर्वं पश्चान्निबद्ध्यते दोषैः ।
वातश्लेष्माधिक्याद्-वातश्लैष्मिक उदीरितः क्वापि ॥ २ ॥

वातश्लैष्मिकज्वरस्य भेदानाह—

साधारण-श्वसनका-न्त्रिक-वातिकाख्य-
भेदाच्चतुर्विध उदीरित एष रोगः ॥ ३ ॥

तस्य निदानम्—

कीटाणवोऽस्य हि गदस्य मरुत्प्रवाह-विस्तारिता जगति मर्त्यसमूहमध्ये।
श्वासायनेन लघु नॄन् ननु संक्रमन्ते-स्यादन्नमार्गत इमे क्वचनाशनाद्यात् ॥
एवं क्वचिच्च पटमाल्यमुखैः प्रकार-रेषां भवेदपि हि संक्रमणं कथं चिद्॥४
पाश्चात्यवैद्यविसरैरणुवीक्षणेन-यन्त्रेण चातिनिपुणं बहुशो निरीक्ष्य ।
निर्द्धारितं सततमस्य गदस्य कीटा-णोर्दण्डवन्नियतरूपमतीव विज्ञैः॥५॥
यदा श्वासमार्गेण कीटाणवोऽस्य-प्रवेशं प्रकुर्युस्तदा ते गलं च ।
प्रणालीं तु वायोः परं दूषयन्तो-व्रजेयुर्ध्रुवं फुप्फुसौ सर्वदैव ॥ ६ ॥
तथा येऽन्नमार्गेण दैवाद्विशेयुः-समस्तं च ते सर्वथा तं रुजेयुः ।
क्वचिद्धातवो दूषितास्तैर्भवेयु-स्ततो रोगमेनं समुत्पादयेयुः ॥ ७ ॥
ततो धातुजातं समस्तं विषाक्तं-प्रकुर्वन्त एते नरान्मारयन्ति ।

मरुच्छ्लेष्ममुख्यं ज्वरं संनिपातं-ससंप्राप्ति चेत्थं सुवैद्या वदन्ति ॥८॥
शिरःशूलमङ्गैकमर्दोऽथ कम्पः-कटीपृष्ठवक्षःस्थलेऽत्युग्रपीडा ।
प्रतिश्यायशैत्यावसादज्वराश्च-गलैकग्रहोऽल्पैर्दिनैर्भूरि कार्श्यम् ॥९॥
बलस्यापि हानिर्भृशं नाडिकाया-गतेर्नातिचाञ्चल्यमाभाति चात्र ।
समन्ताच्च रक्ताऽतिमालिन्ययुक्ता-रसज्ञाऽपि चोच्छूनतामाश्रिताऽक्ष्णा ॥
मरुच्छ्लैष्मिकस्य प्रभेदे तु साधा-रणे चिह्नमेतत् समस्तं समेत्थम् ।
अभिज्ञैर्भिषग्भिर्यथैवोपदिष्टं-तथैवात्र हृद्यैः स्वपद्यैः प्रदिष्टम् ॥ ११ ॥

तत्र श्वसनकस्य रूपम्—

भेदे तथा श्वसनके सकलैः पुरोक्तै-रूपैः सहोद्भवति तीव्रतमोऽपि कासः ।
निष्ठीवनं कफविमिश्रितशोणितस्य-श्वासप्रलापबहुशोणितवर्णताश्च ।
दशेयं ज्वरस्यास्य विश्वस्तवैद्यैः-समस्तैर्भृशं दारुणोदीरिताऽपि ।
अतः सावधानेन सर्वोत्तमेन-चिकित्साप्रकारेण रक्ष्योऽत्र रोगी ॥१३॥

आन्त्रिकस्य रूपम्—

भवेदुद्भवोऽथान्त्रिकाख्यप्रभेदे-वमेर्वाऽतिसारस्य किंवा द्वयोश्च ।
तथोत्क्लेशशूलामयौ कामलाऽपि-क्वचिन्नूनमेवोद्भवेयुर्विशिष्य ॥१४॥

वातिकस्य रूपम्—

अथो वातिकाख्यप्रभेदे विशेषात्-प्रतिश्यायकासज्वरक्षीणताश्च ।
प्रलापो मनोऽस्थैर्यनिद्राविनाशौ-क्वचित् पक्षघातः प्रजायेत दैवात् १५
शीर्षावरणकदाहः-कृतसंनाहः क्वचिच्चैव ।
अवलोक्यत इह साधा-रणचिह्नैर्युत आमयान्वितेषु ॥ १६ ॥

वातश्लैष्मिकज्वरस्योपद्रवाः—

पक्षाभिघातो हृदयावसादः-पुनः पुनश्चाक्रमणं गदस्य ।
तथा प्रदाहो ननु फुप्फुसे स्यु-र्ज्ञेया इमे श्लेष्मरुजा उपद्रवाः ॥१७॥

इति माधवनिदानपरिशिष्टे वातश्लैष्मिकज्वरनिदानं समाप्तम् ।

---

## अथ सन्धिकज्वरनिदानम् ।

तत्रादौ संधिकज्वरस्य परिचयः—

भवेज्ज्वरो यो व्रणशोथपीडा-तोदैर्भृशं संधिगणं प्रपीडयन् ।
घोरोऽपि हृद्रोगयुतः स वैद्य-रुदीरितः सन्धिकनामकोऽत्र ॥ १ ॥

तस्य संप्राप्तिः—

हेमन्तवर्षाशिशिरर्त्तुमध्ये-तथा वसन्तेऽपि च शीतकाले ।
क्लिन्नोष्णभूमिष्वविशङ्कमद्धा-ऽजस्रं जनानां भ्रमतामवश्यम् ॥२॥
तथैव बाल्ये नवयौवनेऽपि-प्रायेण जातेऽपचये बलस्य ।
भवेज्ज्वरो योषिदपेक्षयाऽयं-पुंसां च तत्रापि विशिष्य यूनाम् ॥३॥
लोके तु बिन्द्वाकृतिशालिनैज-कीटाणुहेतोर्जननं सुसिद्धम् ।
तथा गदस्यास्य हि सन्धिकाख्य-ज्वरेति नामापि सदा प्रसिद्धम् ४

तस्य संप्राप्तेः सविस्तरमवतरणम्—

गदस्यास्य कीटाणवो दैवयोगा-द्गलग्रन्थितो धातुमध्ये प्रविष्टाः।
ध्रुवं वातपित्तोल्वणं सन्निपातं-शरीरे भृशं सर्वथोदीरयन्ति ॥ ५ ॥
ततोऽतिघोरं व्रणशोथमाशु ते-ऽधिसन्धि कुर्वन्ति समन्ततो नृणाम्।
विदन्ति चेत्थं भिषजस्तु केचन-स्वबुद्धितः सन्धिकजातिरीदृशी॥६॥
अथापरे तु ब्रुवते सुवैद्या-इदं शृणु त्वं ननु वक्ष्यमाणम् ।
विषं हि कीटाणुसमुत्थितं नृणां-गलाच्छरीरस्थितधातुमध्ये ॥७॥
कृतप्रसारं किल वातपित्तो-ल्वणं त्रिदोषं समुदीरयत् सत् ।
सुघोरमेव व्रणशोथमाशु-करोति सन्धीन् परितः प्रसह्य ॥ ८ ॥
मतद्वयं संप्रति सन्धिकाख्या-गताविदं चेत्थमिह प्रदर्शितम् ।
परन्तु तत्रादिमपक्षमुत्तमं-समाश्रयन् वच्म्यहमग्र एतद् ॥ ९ ॥
अथोपरिप्रोक्तनिमित्तजातैः-सन्धौ प्रयाते बहुशूनतां च ।
या श्लैष्मिकी सन्धिगता कला सा-प्रजायते शोथयुताऽम्बुपूर्णा॥१०॥
तद्धेतुतः स्यात्तरुणास्थिमूर्द्धसु-तथाऽस्थिबन्धेष्वखिलेषु शोथः ।
सन्धेरथाभ्यन्तर एधमानो-विदह्यते पूर्णतया बलासः ॥११॥
विषप्रभावादपि शोणिताणवः-क्षीणा भवन्तीह विशेषतस्तु ।
न्यूनत्वमस्रस्य ततश्च हेतोः-श्वेताणुवृन्दोपचयोऽधिकं स्यात् ॥१२॥
हृदन्तिकस्थायिकलापुटेऽपां-भवेद्भृशं सञ्चय एव शीघ्रम् ।
तथा विकारा व्रणशोथजा हृदि-कपाटमध्ये हृदयस्य वा स्युः ॥१३॥
स्याच्छ्वासयन्त्रीयकलास्थशोथः-सव्ये हि पार्श्वे बहुशो गदेऽस्मिन् ।
लिङ्गैश्च कासश्वसनादिभिः सहा-क्रान्तं भवेत्फुप्फुसमप्यवश्यम्॥१४॥

तस्य रूपम्—

गदे ज्वरः स्यात् सहसेह साधा-रणः स शीतेन विबर्द्धतेऽद्धा ।
अथाङ्गमर्दोऽपि च कण्ठदाहो-हृदि व्यथा स्वेदकृतं बहुत्वम् ॥१५॥
ग्रीवास्तम्भोऽथो गलग्रन्थिमध्ये-शूनत्वं स्यादल्पमूत्रत्वमेव ।
गुल्फे किंवा जानुदेशे कफोण्यां-नृणां प्रायेणैव बन्धे मणेर्वा ॥१६॥
रक्तः शोथो रौद्रलिङ्गाभ्युपेतः-स्पर्शं सोढुं चाक्षमोऽप्यत्र रोगी ।
देहे पीडा दुःसहा सन्धयोऽन्ये-पर्यायेणात्राभिभूयन्त एव ॥१७॥
पूर्वप्रोक्तैर्लक्षणैः सार्द्धमस्मिन्-रोगे वृद्धिर्जायते च ज्वरस्य ।
आसप्ताहं गदस्यास्य कालः-प्रोक्तो वैद्यैः संप्रशाम्येत्तदन्ते ॥१८॥

तस्य साध्यासाध्यत्वं—

यत्र त्रिदोषभवलक्षणमध्यगानां-केषां चन क्वचन दर्शनमस्तु रोगे ।
किंवा हृदामयसमुद्भव एव तत्र-प्राणान्तकः स तु भवेदनुपक्रमश्च ॥१९॥

कथं चिज्ज्वरमुक्तावपि हृद्रोगित्वम्—

कीटाणुसंभवविषस्य तथा चिकित्सा-नैपुण्यतो यदि हि संधिकरोगयुक्तः ।
जीवेत्परं ननु चतुर्दशवासरेभ्यः-किंवैकविंशतिदिनेभ्य इह स्वपुण्यैः २०
तत्रापि रोगमुक्तः सन्-हृदामययुतः पुमान् ।
भवेदेवेति विज्ञेयं-वैद्यवर्यैरशान्तिमान् ॥ २१ ॥

हृद्रोगस्य परिणामः—

सर्वैर्हृदामयसमागतदुःखजातं-प्रायोऽनुभूयत इह प्रसभं मनुष्यैः ।
शोथश्रमश्वसनकादिभिरर्द्यमाने त्यज्यन्त आशु किल तै रसवो विशेषात् ।

अत्र वैशिष्ट्यम्—

प्रायो ज्वरे भवति संधिकनामकेऽस्मिन्-
यूनां तु संधिषु विशिष्य विकारवृन्दम् ।
तद्वन्नृणां हि हृदि बाल्यवयःस्थितानां-
वैशिष्ट्यमित्यपि विबोध्यमुदारवैद्यैः ॥ २३ ॥

सन्धिकज्वरस्योपद्रवाः—

शोथाः सदा हृदयफुप्फुसशीर्षकण्ठ-मध्यस्थिता अथ च तीव्रतरो ज्वरोऽपि ।
नूनं निदानविधिविज्ञवरैः सुवैद्यैः-ख्याता उपद्रवतयेति गदा इहैव ॥२४॥

सन्धिकज्वरे मतान्तरम्—

यः सन्धिकः संप्रति भाषितो मया-स एव कैश्चिज्ज्वर आमवातिकः ।
सिद्धान्तितः स्वीयधिया भिषग्भि-र्विज्ञेयमेतद् ध्रुवमत्र विज्ञैः ॥२९॥

इति माधवनिदानपरिशिष्टे सन्धिकज्वरनिदानं समाप्तम् ।

---

## अथ श्वसनकज्वरनिदानम् ।

तस्य परिचयः—

लाक्षारसप्रतिमरक्तमजस्रमेव-ष्ठीवेज्ज्वरेण बहुशः श्वसनेन युक्तः ।
स्त्यानो भवेदपि च फुप्फुसमूलभागो-यस्य स्मृतः श्वसनकज्वरपीडितः सः

तस्य निदानम्—

ये चान्नवस्त्ररहिता अपि दुर्बलाः स्युः-
श्रान्ताश्च दुःखितहृदो मनुजास्तु दीनाः ।
ये चाप्यजीर्णगदिनो बहुमद्यपा वा-
वृक्कस्य चापि यकृतो ननु शोथिनो वा ॥२॥
मिथ्याऽऽहारान् वा विहारानजस्रं-ये वा कुर्युर्नूनमेव प्रमादात् ।
तेषां प्रायः शीतवर्षाऽऽदिबाधा-हेतोः किंवा पूतिगन्धैकयोगात् ॥३॥
किंवाऽभीघातात् क्वचिद्व्याधिनाऽन्ने-नार्त्तस्यापि प्रत्यहं संगमाद्वा ।
सर्वेष्वेवर्त्तुष्वसावुद्भवेच्च-प्रायः काले शैशिरे वा वसन्ते ॥४॥
किंवा वर्षासु ज्वरः प्रोक्तलिङ्गो-वैद्यैः प्रोक्तं नाम कीटाणवोऽस्य ।
नूनं मूलं जन्मनो नैकरूपा-ज्ञेयाश्चत्वारस्तु तत्र प्रधानम् ॥ ५ ॥
तत्राभिज्ञैर्दारुणास्तु त्रयोऽथो-तेष्वप्यन्त्यो दारुणोऽत्यर्थमुक्तः ।
इत्थं सर्वं प्राच्यपाश्चात्यरीत्या-सम्यङ् निर्दिष्टं निदानं किलास्य ॥ ६ ॥

तस्य भेदौ—

द्विविधः श्वसनकसंज्ञो-गदितो वैद्यैर्ज्वरस्तत्र ।
खण्डीयस्तु प्रथम-स्तथा द्वितीयः प्रणालिकः प्रोक्तः ॥७॥
अत्रैतच्च ज्ञेयं-द्वावपि फुप्फुसप्रदाहसंयुक्तौ ।
तत्रादिमस्य भेदा-विज्ञैः पञ्चैव संप्रोक्ताः ॥८॥
तत्र प्रथमः साधा-रण उत्क्रामकसंज्ञको द्वितीयः ।
अपि केन्द्रिकस्तृतीय-स्तदनु चतुर्थो बृहन्नामा ॥९॥

फुप्फुसावरणप्रदाहः पञ्चमः परिभाषितः-
स्युः प्रभेदा आदिमस्यामी विबोध्या बुद्धितः ।
तदनु द्वितीयस्यापि भेदौ मुख्यगौणविभेदतः-
कथ्यते तेषामथो जातिश्च रूपमशेषतः ॥१०॥

तस्य संप्राप्तेरवतरणम्—

आस्यतो गलतोऽणवोऽस्य श्वासपथतो रोगदाः-
फुप्फुसस्यान्तःप्रकोष्ठे-पूपयाता वै यदा ।
वायुप्रणालीष्वपि विषस्य प्रभावमापाद्य हि तदा-
शोणिते विदधति घनत्वं सर्वदा ते दुःखदाः ॥ ११ ॥
शोणिते घनतामिते वामेऽथवा वामेतरे-
फुप्फुसे किंवा द्वयोरपि जायते शोथो ज्वरे ।
वक्ष्यते संप्रति विशेषश्चात्र।श्रृणु यदि कोष्ठगः-
शोथ आख्यातस्तदा खण्डीयनामविभेदगः ॥ १२ ॥
वातप्रणालीगामिशोथश्चेत्ततः स प्रणालिकः-
कथ्यते फुप्फुसप्रदाहः सद्भिरत्र श्वसनकः ।
ज्वरः पीडाश्वासकृच्छ्रत्वं च तत्र तु जायते-
नूनमुभयोरपि भिषग्भिश्चेति नियतं कथ्यते ॥ १३ ॥

श्वसनकज्वरस्य पूर्वरूपम्—

प्रायो ज्वरे श्वसनके ननु पार्श्वपीडा-श्वासोऽवसादकसने अपि कम्पनं च।
संदृश्यमानमितिलक्षणमग्ररूपं सर्वे गदन्ति भिषजो गदरूपविज्ञाः ॥१४॥

श्वसनकज्वरस्य स्वरूपम्—

ज्वरोऽतितीव्रः सहसैव शीते-न संप्रवर्त्तेत ततोऽतितृष्णा ।
अन्नारुचिः श्वाससमृद्धिरेधे-त पार्श्वशूलं कसनं क्रमेण ॥ १५ ॥
लाक्षारसाभं रुधिरं तु सान्द्रं-कासात्प्रवर्त्तेत मुहुः कफाढ्यम् ।
श्वासेन संस्फूर्जत एव नासा-पुटौ सदा श्वासगतिस्तु तीव्रा ॥१६॥
कपोलभागेऽपि च रक्तिमा स्या-त्स्वेदो ललाटे परिदृश्यतेऽद्धा ।
स्विन्नानि गात्राणि भृशं भवेयु-र्निरन्तरं दुर्बलता प्रमोहः ॥ १७ ॥
सिद्धार्थकाभाः पिडकास्तनौ सं-दृश्यन्त एवापि च कण्ठकूजनम् ।
सादः प्रलापः परुषाऽपि जिह्वा-कार्कश्ययुक्ता मलिना भृशं च ॥१८॥

द्वैगुण्यमद्धाऽऽश्रयते गतौ तु-स्यात् कोमला स्थूलचला च नाडी ।
यावज्ज्वरं भाति दशेयमस्या-ज्वरादिमुक्तावपि दुर्बलत्वम् ।
प्रायेण सा संभजते मृदुत्वं-विनिश्चितं चेति विशेषतोऽत्र ॥ २० ॥
संख्या न चास्यां परिगण्यते गते-ररिष्टकाले किल केनचित् क्वचित् ।
अमूनि लिङ्गानि भवन्ति प्रायः-प्रणालिकेत्याह्वयभेदमध्ये ॥ २१ ॥

धातुमलपाकानुसारं तीव्रातीव्रलक्षणानुसारं वाऽस्य मुक्तिः—

सप्तमे दिवसेऽष्टमे वा प्रायशो नवमे क्वचिद्-
दृश्यते दशमेऽत्र सहसा ज्वरविमुक्तिः कुत्रचित् ।
रोगिणो देहे तदैव स्वेदनिचयस्योद्गमः-
स्याच्च तेन हि रोगमुक्तिर्जातु वाऽसुविनिर्गमः ॥२२॥

श्वसनकज्वरस्य साध्यासाध्यत्वम्—

एकस्मिन्नधिफुप्फुसं विधिवशाद्दुष्टे च मन्दे ज्वर-
देहे साधुतया स्थिते ननु बले पादत्रयेऽस्त्युत्तमे ।
ज्ञातव्या सुखसाध्यता श्वसनकेनार्त्तस्य नुः सर्वदा-
स्वेदो यद्यधिको ज्वरोऽपि च भवेत्तीव्रोऽथ वृद्धो गदी ॥२३॥
किंवा क्षीणतमस्तदा तु भिषजि द्रव्येऽथ भृत्ये शुभे-
शास्त्रप्रोक्तगुणान्विते सति कथंचिद्दैवयोगात् क्वचित् ।
जीवेत् कश्चिदिहामयाविषु नरः सत्पुण्यपुञ्जान्वितः-
प्रायेणान्तकमन्दिरान्तिकगतिं प्राप्नोति चात्रान्यथा ॥२४॥

श्वसनकज्वरस्यारिष्टानि—

यस्याक्रान्तौ फुप्फुसौ स्तः कदाचित्-किंवाऽप्येकः फुप्फुसोऽशेषतः स्यात् ।
नासामध्ये श्वासशब्दो विशेषः-स्वेदोऽत्यर्थं जीवने तस्य शङ्का ॥२५॥
स्वेदस्नातो यः प्रलापेन मन्दे-नोपेतः सन् पूरुषः प्रायशः स्यात् ।
वेपेते वा यस्य हस्तौ च पादौ-नूनं प्राप्नोत्यत्र मृत्युं स रोगी ।२६॥
यो दुर्वारेणातिसारेण पूर्ण-माक्रान्तः सन् क्षीण एवाधिकः स्यात् ।
कीनाशागारं यियासुं नरं तं-विद्याद्वैद्यः स्वल्पकालादवश्यम् ॥२७॥

श्वसनकज्वरस्योपद्रवाः—

निद्रानाशोऽपि प्रलापोऽथ कम्प-स्तीव्रस्तापोऽत्यर्थमेवातुरस्य ।
संज्ञाहानिः कार्यरोधो हृदोऽस्मिन्-ज्ञेया एते सर्वदोपद्रवा वै ॥२८॥

इति माधवनिदानपरिशिष्टे श्वसनकज्वरनिदानं समाप्तम् ।

## अथ क्लोमरोगनिदानम् ।

तत्रादौ क्लोमस्वरूपम्—

अग्न्याशयः संप्रति यः स वैद्यैः-क्लोमेतिनाम्नाऽऽधुनिकैर्निगद्यते ।
कुत्रास्ति प्राचीनभिषक्प्रदिष्टं-क्लोमेति नाद्याप्यवधारितं हि ॥ १ ॥
निरूप्यतेऽद्धाऽऽधुनिकानुसारि-क्लोमस्वरूपं सविशेषरूपम् ।
भागे तु दक्षे हृदयादधः स्यात्-क्लोम्नो निवासो विदुषां मतेन ॥ २ ॥
इदं तु नूनं सलिलप्रवाहि-सिरैकमूलं लपितं विशेषात् ।
तृष्णासमुत्पादनशालिचायु-र्वेदज्ञवृन्दैर्बहुशो निरीक्ष्य ॥ ३ ॥

क्लोमरोगनिदानम्—

क्लोम्नोऽभिवृद्धिर्मृदुताऽथवाऽन्नैः-स्निग्धैर्भृशं वा गुरुभिः सुसेवितैः ।
किंवाऽभिघातादिभिरेव नूनं-संजायते मानवदेहमध्ये ॥ ४ ॥
किंचापि संघात इहास्रजातः-प्रदृश्यते विद्रधिराश्ववश्यम् ।
एवंविधा नैकविधास्तथाऽन्ये-रोगा भवेयुर्भृशदारुणाश्च ॥ ५ ॥

क्लोमरोगलक्षणम्—

अग्नेर्मान्द्यं पाण्डुता चापि कार्श्यं-भ्रान्तिः सादः स्यादथोर्ध्वोदरे तु ।
औष्ण्यं काठिन्यं तथोत्क्लेशवान्ती-क्लोमस्थायिन्यामये कामलाऽपि॥६॥
प्रजाते विकारे सदा विद्रधेस्तु-भवेदत्र शूलं तथाऽऽध्मानमेव ।
तृषा चाधिकाऽप्यश्मरीतुल्यरूपा-ऽतिघोरा शिला कष्टदायिन्यवश्यम् ७

इति माधवनिदानपरिशिष्टे क्लोमरोगनिदानं समाप्तम् ।

---

## अथौपसर्गिकविषूचीनिदानम् ।

तस्याः परिचयः—

पुरा या विषूची भिषग्भिः प्रदिष्टा-मता दोषसंबन्धयुक्ता सदा सा ।
इदानीं मया वक्ष्यते तूपसर्ग-प्रजाता विषूची महाघोररूपा ॥१॥
अयं लोकमध्ये तु मारीस्वरूपे-ण सर्वत्र रोगः प्रसारं व्रजेद्धि ।
प्रदृश्येत संक्रामकश्चाथ तत्रा-तिसारो वमिर्न्नमत्यर्थमेव ॥२॥

अस्य निदानम्—

दण्डाकारास्त्वस्य कीटाणवः सं-प्रोक्ता नूनं मूलभूता भिषग्भिः ।
तेषां वासः प्रायशो रोगिणां स्या-दन्त्रे मूत्रे वा मले भाग्यदोषात् ॥३॥

अधिपित्ताशयमथवो-दरकक्लायां कदा चिदखिलासु ।
उद्भूतासु लसीको-त्पादनकुशलासु हि ग्रन्थिषु ॥४॥
प्रसरन्त्यस्य गदस्य हि-कीटाणव आन्त्रिकज्वरवत् ।
यान्ति विशेषाद् ग्रीष्मे-प्रावृषि पयसाऽपि ते प्रसारमत्र ॥५॥
इत्थं चायं रोगो-वस्त्रैर्भोज्यैर्विशेषतो मलिनैः ।
वस्तुभिरथ च स्थाने-र्नूनं यायाद्धि संक्रमणम् ॥६॥

तस्य संप्राप्तेरवतारः--

कीटाणवस्त्वन्नपथेन गत्वा-क्षुद्रान्त्रमध्ये समनुप्रविष्टाः ।
चेत्तत्र वृद्धिं बहुशो ह्यवाप्य-प्रसारयेयुर्विषमस्त्रमध्ये ॥ ७ ॥
तदा प्रजायेत विपूचिकेयं-भिषग्वरैरित्थमिहोपदिष्टम् ।
केचित्तु वैद्या गदहेतुविज्ञा-वदन्ति यत्त्वत्र शृणुष्व तत् त्वम् ॥८॥
क्षुद्रान्त्रमध्येऽनिशमेव तिष्ठद्-विषं विपूचीं जनयत्यवश्यम् ।
इत्थं विपूच्या भवतीह जन्मो-पसर्गजाया अतिदुःखदायाः ॥ ९ ॥
क्षुद्रान्त्रमध्ये तु ततः स्थितासु-ग्रन्थिष्वपि स्यान्ननु शोथजन्म ।
किंचोदरस्थायिकलालसीका-ग्रन्थिष्ववश्यं हि भवेत्तदेव ॥१०॥
ततो वमेरप्यतिसारतः स्याद्-विनिर्गमो वै तरलस्य तेन ।
घनत्वमात्यन्तिकमस्त्रमध्ये-जायेत रोगेऽत्र विपूच्यभिख्ये ॥११॥
ततो निमित्तेन तदा त्वनेन-विषप्रभावादपि वृक्कयुग्मे ।
मूत्रस्य निर्माणविधेर्निरोधः-संजायते रोगिजनेष्वजस्रम् ॥ १२ ॥
मूत्रप्रवृत्तिस्तत एव नात्र-संदृश्यते जातु चिदामयेऽद्धा ।
अन्तस्तु तापोऽथ बहिर्हि शैत्यं-न्यूनत्वतः स्यात्तरलास्रयोश्च ॥१३॥

विपूच्याः पूर्वरूपम्--

आदौ नाशश्चेत्क्षुधायास्तु तृष्णा-ऽऽधिक्यं हृल्लासो बलस्यापि हानिः ।
ओजोनाशश्चारतिः स्यात्तदा तु-ज्ञेयं नूनं पूर्वरूपं विपूच्याः ॥ १४ ॥

विपूच्या रूपम्--

क्वचिच्चातिसारो वमिः स्याद् गदेऽस्मिन्-क्वचित् केवला वा वमिर्दृश्यतेऽपि ।
तथाऽन्यत्र सामान्यमुक्तं विपूच्याः समस्तं बुधैर्लक्षणं ज्ञेयमत्र ॥ १५ ॥
स्वरूपं च साध्यस्य किंवाऽप्यसाध्य-स्य बोध्यं बुधैर्दोषजाया विपूच्याः।
यथा भाषितं वैद्यवर्यैस्तथैवो-पसर्गोद्भवायाश्च कृत्स्नं विशेषात् ॥१६॥
गदस्यास्य चात्यर्थमुग्रे स्वरूपे क्षणादेव मृत्युर्भवेन्मानवस्य ।

गदे दारुणे चेदृशे तु प्रजाते म्रियन्ते नरो रोगिणोऽद्धाऽप्यसंख्याः ॥१७॥
अनुग्रेऽपि रूपे क चिद् यान्ति भीत्या-गदे पञ्चतामत्र नूनं मनुष्याः ।
बुधैः कैश्चिदस्याः स्वरूपं चतुर्द्धा-सुखेनावबोधार्थमुक्तं विशेषात् ॥१८॥

उपसर्गजविषूचिकायाः पूर्वावस्था—

हृच्छूलमादौ तु भवेद्गदेऽस्मिंस्ततो वमिश्चाप्यतिसार एव ।
तत्रापि पूर्वं सरणं मलस्य भुक्तस्य च च्छर्दनतस्तथैव ॥ १९ ॥
तत्पश्चादतिसार-स्याथ वमेः स्याच्च पीतवर्णत्वम् ।
तदनु तयोरपि तण्डुल-जलसन्निभता भिषग्भिरिह कथिता ॥२०॥

द्वितीयावस्था—

चिह्नानि यानीह पुरोदितानि भवेयुरद्धा द्विगुणानि तानि ।
आक्षेपतृष्णाऽरतयश्च तीव्रा-भुक्तं तथाऽन्नं न पचेच्च किं चित् ॥२१॥

तृतीयावस्था—

द्रवातिसाराद्बहुशोऽत्र रक्तं-गाढं भवेद् देहभवं तु नूनम् ।
क्षीणेन्द्रियः क्षीणतनुप्रभोऽति-दीनो नरो हीनबलः सदैव ॥२२॥
स्याच्छीतदेहोऽपि च नेत्रमन्त-र्गतं स्थिरं तस्य च शीर्णवाक्त्वम् ।
नीलौष्ठताऽन्यैरपि घोररूपै-श्चिह्नैर्युतत्वं यमसद्मपान्थता ॥ २३ ॥

तुर्यावस्था—

यदाऽन्तकग्रासविमुक्तदेहो-व्रजेदवस्थां तु गदा तुरीयाम् ।
तदाऽस्य पूर्वोक्तसमस्तलिङ्गा-नि वैपरीत्यं नितरामियुः ॥ २४ ॥
यदा जातु चिद् रोगिदेहे ज्वरः स्यात् तथा च प्रवर्त्तेत मूत्रं हि सम्यक् ।
स्थिरत्वं प्रयायाच्च नाडी तदा तू-पसर्गप्रजाता विषूचीह साध्या ॥२५॥
भयाद्विस्तृतेः ख्यापनं चात्र तेषां समासेन किञ्चित् कृतं तेन सद्भिः ।
तदीयप्रबन्धे च तज्ज्ञानमद्धाऽधिगन्तुं प्रबन्धो विधेयो भिषग्भिः ॥२६॥

इति माधवनिदानपरिशिष्ट औपसर्गिकविषूचिकानिदानं समाप्तम् ।

---

## अथोरस्तोयनिदानम् ।

तस्य निदानपूर्विका संप्राप्तिः—

ज्वरादिष्वसावानुबन्ध्येन रोगः-प्रजायेत किंवा क्वचिद् गुल्मरोगैः ।
क्वचिच्चाभिघातादिभिर्वा निमित्तै-र्विलोक्येत लोके नरेष्वत्र बाह्यैः ॥१॥
उरस्तोयनामामये प्रायशोऽस्मि-न्नुरस्येकपार्श्वेऽथवा पार्श्वयोर्वै ।
भवेत् संचयोऽद्धा जलीयस्य धातो-रपि प्राणहृत् पूर्णतो यः प्रदिष्टः ॥२॥

उरस्तोयस्य रूपम्—

श्वासस्य कृच्छ्रत्वमथो कफस्या-स्रावः पिपासाऽङ्घ्रिगतश्च शोथः ।
नीलत्वमास्ये रदनच्छदेऽधो-मूत्रप्रवृत्तिर्बहुमन्दवेगात् ॥ ३ ॥
कृच्छ्राच्च मात्राऽल्पतया विशेषा-दत्यन्तसूक्ष्मा द्रुतगामिनी स्यात् ।
नाडी नितान्तं विषमा नरस्य-ध्रुवं शयानस्य न सौख्यलेशः ॥ ४ ॥
आसीन एवापि सुखी कथंचि-द्भवेद्गदी तेन नितान्तकृच्छ्रः ।
सदा ह्युरस्तोयपदाभिधानो-गदो भिषग्भिर्गदितोऽयमद्धा ॥ ५ ॥

इति माधवनिदानपरिशिष्ट उरस्तोयनिदानं समाप्तम् ।

---

## अथ फुप्फुसावरणप्रदाहनिदानम् ।

अस्य परिचयः—

उरस्तोयसंज्ञे गदे यन्निमित्तं-पुरा ख्यापितं तत्र तेनैव चात्र ।
समुत्पादयेयुः प्रदाहं तु कीटा-णवः फुप्फुसाच्छादिकायां कलायाम् ॥१॥
प्रसारं च लब्ध्वाऽत्र तद्वत्तु ते त-रलेनैव नूनं कलां फुप्फुसीयाम् ।
सदा पूरयेयुस्ततस्तस्य शोषो-द्विधा दृश्यते रोगिमध्ये विशेषात् ॥२॥
भवेत्तत्र चाद्यस्तु संपूर्णशोषी-द्वितीयो ह्यसंपूर्णशोषी प्रभेदः ।
तयोर्वैद्यवर्यैः प्रदिष्टं च साधा-रणं लक्षणं प्रोच्यते सर्वमग्रे ॥ ३ ॥

अस्य लक्षणम्—

गदेऽस्मिन् भवेत् पार्श्वशूलं च कासो,ज्वरोऽन्तः सशोथप्रदेशप्रपीडा ।
शयानः सदा रुग्णपार्श्वेन रोगी-सुखं सर्वथा संलभेत प्रकामम् ॥ ४ ॥

इति माधवनिदानपरिशिष्टे फुप्फुसावरणप्रदाहनिदानं समाप्तम् ।

---

## अथ स्मरोन्मादनिदानम् ।

तस्य निदानम्—

यश्चोन्मादः प्रायशः पूरुषस्या-प्राप्तेः प्रेयस्याश्च रेतोविकारात् ।
किंवोपस्थस्येन्द्रियस्यापि दोषाद् वैगुण्याद्वा मारुतस्यात्र वै स्यात्॥१॥
अनेन प्रकारेण नार्या यदि स्या-दवाप्तेरभावात् प्रियस्यापि पुंसः ।
अथोन्माद एभिर्निमित्तैः पुरोक्तैः स एवोदितोऽत्र स्मरोन्मादरोगः ॥२॥

तस्य लक्षणम्—

स्मरोन्मादरोगे भवेत्स्तब्धताऽथ-प्रलापस्तथा कम्पनं श्वास एव ।
तनौ पाण्डुता रोदनं चाप्यधैर्य-परं चिन्तनं प्रेयसो वा प्रियायाः ॥३॥

तस्य दश दशाः—

आदौ चक्षुःप्रीतिरुक्ता ततः स्या-च्चिन्ताऽऽसक्तिश्चाथ संकल्प एव।
निद्राच्छेदः कार्श्यताऽथो निवृत्ति-र्भोगात्सर्वस्मात्सदैवेन्द्रियाणाम्॥
लज्जानाशोन्मादमूर्च्छाश्च मृत्यु-र्ह्येताः संख्याता दशास्तु स्मरस्य।
आक्रम्यन्ते चाभिरत्यल्पसत्त्वा लोका अस्मिन् दुर्बलात्मान एव ॥५॥

इति माधवनिदानपरिशिष्टे स्मरोन्मादनिदानं समाप्तम् ॥

## अथ भ्रमोन्मादादिनिदानम् ।

भ्रमोन्माद एवं जडोन्माद उग्र-स्तथा यौवनोन्माद आलोक्यते यः।
नृलोके तु गर्भप्रसूत्यादिजाता इहोन्मादरोगा अनेके च ये स्युः ॥ १
समेषां भवन्त्येव चिह्नानि तेषा-मवस्थाऽनुसारेण भिन्नानि यानि।
अतो बुद्धिमद्भिस्तु सद्भिर्भिषग्भिः स्वया प्रज्ञया वेदितव्यानि तानि॥

इति माधवनिदानपरिशिष्टे भ्रमोन्मादादिनिदानं समाप्तम् ।

## अथ तत्त्वोन्मादनिदानम् ।

पूर्णं भाग्यं सर्वथाऽहो मदीयं प्राप्ता पूर्णा ब्रह्मणो यत् कृपाऽद्य।
एवंरूपो यो भ्रमोत्थो हि मोहो वैद्यैस्तत्त्वोन्माद इत्युक्त एव ॥ १ ॥
तत्त्वोन्मादो हर्षमौढ्यं च तस्य सर्वत्रैव ब्रह्ममोहो नृलोके।
नामान्युक्तान्येष सद्भिर्वृथाधी-र्जातो व्याधिर्भाषितो व्याधिविद्भिः॥
तद् ब्रह्मास्ते कुत्र वा किंस्वरूपं नो जानात्येतत्त्वहो कोऽपि किंचित्।
नूनं सर्वदर्शनैर्वा पुराणै-र्नाप्तं यस्माद् ब्रह्मणो दर्शनं हि ॥ ३ ॥
एकेशकर्तृकमिदं निगदन्ति विश्वं केचिद्बुधा अथ निरीश्वरमेव चान्ये
ब्रह्माण्डमेतदखिलं बहुधा वृथैव ब्रह्मप्रतर्कवशतो वसुधातलेऽस्मिन् ॥४
मानं दुरूहमिह भाति सदैव सत्ता-यां ब्रह्मणोऽथ च दयाऽऽश्रपि दूर आस्ता
निर्णीतमत्र न कदा चन केन चित्तद् निर्णयमप्यनिशमेव न चेत्यत्रेहि॥
ब्रह्मन् मदर्थमिदमद्य विधेहि नूनं किचाप्यरातिमधुना जहि मेऽरमेतम्
वित्तं प्रदेहि शुचिकीर्त्तिमपि प्रदेहि निष्कण्टकं विततराज्यमिह प्रदेहि।
पीनोन्नतस्तनवतीं सुदतीं मृणाल-बाहुं विशालनयनां सुकुलां सुशीलां
रम्भोरुमप्यविरतं रसिकावतंसां नर्मप्रियां स्मरकलाकुशलांसु मध्याम्॥
तन्वीं तथा मदनुगां स्मितशोभितास्यां सर्वाङ्गसुन्दरतनुं तनुमध्यभागां
बिम्बाधरां श्रुतिमनोहरवाग्विलासां देहि प्रियां सकलदेहिजनप्रियां मे

न ब्रह्म चेत्थमलमर्थनमात्रतोऽति-भीतं ससंभ्रममभीप्सितमप्यनूनम् ।
संपादयिष्यति सदेति विमूढबुद्धेः संसारमध्यपतितस्य च ते तु नूनम् ॥९॥
काचित्कदाचन च ते सफलाऽर्थना स्या-च्चेत्प्रार्थितेषु विषयेष्वखिलेषु तेषु।
जानीहि तत्तु कलितं ननु काकताली-यं ब्रह्म नैव किल तत्र निमित्तमीषद् १०
न ब्रह्म हृष्यति तव स्तुतिभिः कदाचि न्न द्वेष्टि वाऽविरतनिन्दनतोऽपि जातु।
अस्यास्तिवादिमनुजोऽतिप्रियोऽथ नास्ति-
वादी जनो नहि भवेत् क चनाप्रियोऽपि ॥ ११ ॥
जायेत वाऽऽदरमतिर्नहि पण्डितेऽस्य मूर्खे जने नहि कदाचिदनादरोऽपि ।
नास्योद्भवेदपि भयं धनिनः सकाशा न्नोत्पीडनप्रकृतिरीपदतीव निःस्वे १२
म्लेच्छे श्वपाककुलजे श्रुतिपारगे वा विप्रेऽपि मद्यपजने गणिकाप्रसक्ते।
किंवाशुचावपि शुचौ पृथुकेऽथ वृद्धे
किंवाऽधिवेश्यमधिसाध्वि समस्तलोके ॥ १३ ॥
सर्वत्र संस्थितवदत्र हि विश्वरूपं ब्रह्मैव भाति बहुशस्तु सनातनं तौ । १४
एवंविधस्य ननु तस्य जगत्समस्त-मेतद्विधानमिह मत्प्रमदाय बोध्यम् १
तत्त्वेन चोन्माद्यति यस्तु तत्त्वो-न्मादस्ततस्तस्य गदोऽयमुक्तः ।
प्रायः स दुर्बुद्धिमतां च नीचा-त्मनां कदाचिन्महतामपि स्यात् ॥१५॥

तत्त्वोन्मादनिदानम्—

अतिप्रगाढान्ननु चेतसोऽसौ धर्मादिमध्येषु वृथाग्रहाच्च ।
मरुत्प्रकोपादनिशं तु तत्त्वो-न्मादः प्रजायेत गदो विचित्रः ॥ १६ ॥

तत्त्वोन्मादस्य लक्षणम्—

प्रमूढताऽतिस्थिरता तथाऽस्मि-न्नस्पन्दता स्याच्च कनीनिकायाम् ।
उन्मीलितं चक्षुरतो निरन्तरं ह्युन्निद्रताऽथो बहुवाग्मिताऽद्धा ॥ १७ ॥
दम्भोग्रभावा वपि चातिहासो विक्षेप उन्माद उदाररोदनम् ।
एवंविधानि स्युरिमानि तत्त्वो-न्मादे तु चिह्नान्यखिलानि नूनम् ॥१८॥

इति माधवनिदानपरिशिष्टे तत्त्वोन्मादनिदानं समाप्तम् ।

---

## अथ ताण्डवरोगनिदानम् ।

तत्रादौ तस्योपोद्घातः—

सुगन्धिपुष्पै रसवत्फलैर्नगैः समन्विते सिद्धमहर्षिसेविते ।
निनादरम्यद्विजवृन्दनादिते हिमाचले श्वापदसंकुलेऽमले ॥ १ ॥

मनोहरे सच्छिखरे सनिर्झरे विराजमानं वटमूल आसने ।
समस्तविज्ञाननिधिं मुनीश्वरं नितान्तमायुर्विदुषामधीश्वरम् ॥ २ ॥
तपःप्रभादीप्तकलेवरं गुरुं दयालुमात्रेयमुरभ्र आदरात् ।
कृताञ्जलिश्चार्त्तनरानुकम्पया प्रशान्तचेता इति साध्वभाषत ॥ ३ ॥
अभूत्कथं चात्र जनिस्तु ताण्डवा-मयस्य चिह्नानि च कानि तस्य ।
कथं प्रतीकारमिहाचरेज्जन-स्तदीयमेतत्कृपयाऽखिलं वद ॥ ४ ॥
इमामधिश्रुत्य तदर्थनां वरा-मृषीश्वरो धीरतरोऽत्युदारः ।
तमात्मशिष्यं प्रति शिष्यवत्सलो-ऽब्रवीदिदं व्यक्तपदार्थवद्वचः ॥ ५ ॥

ताण्डवरोगस्य निदानम् ।

आत्रेय उवाच—

प्रीतोऽस्मि हे वत्स ! तवातिभक्त्या यच्छ्रोतुमिच्छस्यधुना ब्रुवे तत् ।
इदं तु दक्षाय पुराऽवदज्जगत् पितामहो लोकहिताय हर्षितः ॥ ६ ॥
चिरन्तनातङ्कपरानुबन्धतो बलक्षयात्क्रोधमुदोः प्रकर्षतः ।
क्रिमेश्चयात् स्वप्ननिरोधहेतुतः प्रकर्षणादप्यतिविड्विबन्धतः ॥ ७ ॥
आशाऽतिघातादधिकाभिघातात् स्त्रीणां विशेषेण रजोविकारात् ।
अत्युग्रभावान्ननु पृष्ठवंशे कशेरुकाभञ्जनमुद्भवेद् यत् ॥ ८ ॥
स देहिनां दुःखकरः परः सदा गदोऽगदङ्कारवरैरुदीरितः ।
अकाण्डमेवाङ्गकदम्बताण्डवात्प्रचण्डरीत्या ननु ताण्डवाह्वयः ॥९॥
कैशोरके वयसि प्रायश एष योषा-मध्ये विशेषत इहातिजराऽऽतुराणाम् ।
नृणां बलापचयतो नितरां प्रजाये-तैवामयोऽतिभयदायितया प्रसिद्धः १०

ताण्डवस्य स्वरूपम्—

आरभ्य वामभुजतः प्रथमं तु प्रायः संजायते तदनु चापरबाहुमध्ये ।
संचाल्य तौ तदनु पादयुगं ततोऽङ्गा-न्येवं प्रचालयति ताण्डवरोग एषः११
तेनामयी न किमपीह हि मुष्टिमध्ये द्रव्यं निधातुमपि पारयति प्रयत्नैः।
नो वा समर्पयितुमात्ममुखे कदाऽपि भक्ष्यान्नमीषदपि ताण्डवपीडिताङ्गः१२
नृत्यन्निव प्रचलति प्रसभं विशेषाद् बीभत्सनैकविधचेष्टितमास्यसंस्थम्।
संदर्शयन्नतिचलः सततं च तिष्ठे-न्निद्रादशामनुभवन्न भवेत् सकम्पः ।

इति माधवनिदानपरिशिष्टे ताण्डवरोगनिदानं समाप्तम् ।

## अथ महागदनिदानम् ।

अस्य पर्यायाः—

महागदस्यैव हि यानि नामा न्युक्तानि लोके सकलानि तानि ।
आकर्णनीयानि भवद्भिरद्धा संकीर्त्यमानानि मयाऽधुनाऽत्र ॥ १ ॥
अतत्त्वाभिनिवेशोऽस्मि-न्नपदार्थगदस्तथा ।
विक्षिप्तता गदोद्वेगो महागद उदीरितः ॥ २ ॥
सदा गदोद्वेगत एव भिन्नो-महागदोऽयं बहुभिस्तु मन्यते ।
परन्तु भेदोऽत्र हि सूक्ष्मदृष्ट्या-ऽवलोकनात्कश्चन न प्रदृश्यते ॥३॥
यतो गदोद्वेगवदत्र बुद्धि-र्महागदे स्याद्विषमा विशेषतः ।
स्यादप्यभिव्याप्त इहामये महा-गदे गदोद्वेग इति प्रबोध्यम् ॥४॥
सुखावबोधाय तथाऽपि रोग-निदानलिप्साऽन्वितमानसानाम् ।
नृणां विशेषादिह वर्ण्यते मया-तयोः पृथग्लक्षणमप्यशेषतः ॥ ५ ॥

तत्रादौ महागदस्य वर्णनम्—

निरन्तरं दुर्मलिनान्नभोजिनो-निगृह्णतः प्राप्तसमस्तवेगान् ।
स्निग्धैश्च रूक्षैरपि चोष्णशीता-दिकैर्निमित्तैरतिमात्रसेवितैः ॥६॥
दोषाः प्रदुष्टा हृदयं समाश्रिताः-शिरा मनोबुद्धिवहाः प्रदूष्य ।
तिष्ठन्ति पश्चाद्रजसाऽथ मोहे-नैवावृते चात्मनि सत्यवश्यम् ॥ ७ ॥
तथा च बुद्धौ मनसि प्रवृद्ध-रजस्तमोभ्यामतिमात्रमावृते ।
दोषैरथ व्याकुलिते हृदि स्या-न्नरो विमूढो बहुशोऽल्पचेतनः ॥ ८ ॥
करोति बुद्धिं विषमां च नित्या-नित्ये पदार्थेऽपि हिताहिते तु ।
चिह्नैरमीभिर्नियतं महागदं-वैद्या अतत्त्वाभिनिवेशमाहुः ॥ ९ ॥

गदोद्वेगस्य वर्णनम्—

अन्यन्तदुर्बलतया मनसोऽथ मस्ति-ष्कस्यातिसंभ्रमवशान्नु मानवानाम्।
नूनं वृथा विविधकल्पनयौकजातः-ख्यातो स आमय इहाद्य शृणुष्व तं त्वम्१०
उपर्युक्तहेतुप्रजातामयो नौ-गदोद्वेगसंज्ञो भिषग्भिः प्रदिष्टः ।
तदीयं स्वरूपं च शास्त्रानुरूपं-यथावन्मया प्रोच्यते साधु सर्वम् ॥११॥
विना व्याधिना व्याधिशङ्का यदि स्यात्-तदा तं गदोद्वेगमेवात्र विद्यात्
पदार्थस्य राहित्यतः सर्वथा सोऽ पदार्थो गदो भाषितः संज्ञयाऽद्धा॥१२॥

गदोद्वेगस्य निदानम्—

शारीरिकश्रमवशान्मनसः श्रमाद्वा नैराश्यतोऽपि च शुचो बलहानितो वा।
मानस्य हानित उदारभयाच्च सत्त्व-हानेस्तथैव विधिबीजसमुत्थदोषाव१३

गदोद्वेगसंज्ञो गदो जायतेऽसौ–निदानं त्विति प्रोक्तमत्रार्यवैद्यैः ।
अतीवाद्भुतस्यास्य रोगस्य–चिह्ना–न्यथाग्रेऽद्भुतानीह कृत्स्नं शृणुष्व १४
गदेऽस्मिन् भवेद् यस्य रोगस्य चिन्ता–नरे लक्षणं तस्य जायेत नूनम्।
गदी कोऽपि मन्येत नैजोदरेऽन्त्र–प्रविष्टं कथं चिद् ध्रुवं गूढपादम् ॥१५॥
भ्रमन्तं च तं खाद्यमानं हि तेन–स जानाति सर्वं प्रभुक्तं स्वमन्नम् ।
निरष्यत्ययं किं कथं वा पथाऽथो–विनङ्क्ष्यत्युपायेन केनेह नूनम् ॥१६॥
न जाने करिष्यत्ययं किं विधात–र्भवेयं न दष्टः कदाचिच्च तेन ।
मदीयोदरस्थस्य चास्य प्रणाशः-प्रयत्नेन केन ध्रुवं संभवेद्वा ॥१७॥
निमित्तेन चानेन मृत्युर्मदीयो–भविष्यत्यवश्यं च दुर्दवयोगात् ।
सदा तर्कयन्नित्थमेवात्मनि स्वे गदार्त्तोऽश्नुते दुःखमत्यर्थमत्र ॥ १८ ॥
प्रजानाति कश्चित्स्वमस्तिष्कमध्ये–प्रविष्टं च कं चित्किथंचिद्धि भेकम्।
स भित्त्वा मदीयं च मस्तिष्कमाशु–हनिष्यत्यवश्यं नु मामित्यजस्रम् १९
तनुं मन्यते काचरूपां च कश्चित्–स्वकीयामतस्तस्य रक्षाऽर्थमेव ।
प्रकामं करोति प्रयत्नं स नूनं–मुधाऽनेकरूपाभिरेवंविधाभिः ॥२०॥
सदैवाकुलः प्रायशो भूरिचिन्ता–भिरार्त्तो गदोद्वेगरोगेण भीतः ।
सुखं चाप्नुवन्नैव किंचित् क्वचिद्वै-प्रशुष्येदिवारात्रिमध्ये विशेषात्॥२१॥
न शक्नोति स प्रायशःसान्त्ववाक्यै-र्भृशं सान्त्वितोऽभीक्ष्णमप्यात्मचित्ताद
निराकर्त्तुमद्धा भ्रमं पूर्वमुक्तं–सुयुक्त्याऽपि दूरीकृतं वा कदा चित् ॥२२॥
तव भ्रान्तिरेषेति योऽस्मै गदेद्वा–स तस्मै सदा द्रुह्यति भ्रान्तचित्तः ।
य एतद्विचारानुसारेण रोगा–नुमोदी स तस्मै ध्रुवं रोचतेऽपि ॥ २३ ॥
रुजा चातिकष्टप्रदा तस्य पक्वा–शये लक्ष्यते श्लेष्मणा संततं हि ।
प्रलिप्ता रसज्ञा तथा श्वासमध्ये·भवेत् पूतिगन्धो गदेऽस्मिन् विशेषात्२४
वमिः स्यादथोत्क्लेश एतत्तु सर्वं·ध्रुवं लक्षणं जीर्णतायाश्च बोध्यम् ।
अथ स्पर्शशक्तेश्च तीक्ष्णत्वमत्रा-नुभूयेत केनापि रोगार्दितेन ॥२५॥
जलोदरादेरुदरामयस्य वा–विपाण्डुताया हृदये निरन्तरम् ।
सांघातिकस्यापि गदस्य कश्चित्–करोत्यतीवानुभवं गदीह ॥ २६ ॥

क्वचित्पुरुषताक्षयो भवति रोगिणि प्रायशः-
क्वचिच्च सततज्वरो–दय उदारदुःखप्रदः ॥
क्वचिच्च किल कम्पना–दिकमलं गदोद्वेगिनि·
त्विति प्रकृतितोऽप्यने–कपरिकल्पनासम्भवाः ॥ २७ ॥

भवन्ति बहुशोऽनिशं-भ्रममयाश्च ये त्वामया·
निरस्ततमसत्त्वव-त्स्वपि विशिष्टमूर्खेष्विह ।
न केन चन भाषितुं निखिलरूपतस्तान् क्वचित्
क्षमेण ननु श्रूयते तत उदारवैद्यैः स्वयम् ॥ २८ ॥
तदीयपवनप्रभृत्यखिलदोषरूपानुसा-
रिलक्षणनिरीक्षणात्सततमेव बोध्याश्च ते ।
गदोऽयमुपजायते क्व चन नैव कैशोरके
न वा जरसि वै निमित्तमिह भाति चेतोगतिः ॥ २९ ॥
रजःप्रसेकात्प्रतिमासमद्धा स्त्रिया विशुद्ध्यत्यथ धातुवृन्दम् ।
अतो नहि प्रायश एव तस्यां मनोगदस्यास्य समुद्भवः स्यात्॥३०॥

इति माधवनिदानपरिशिष्टे महागदनिदानं समाप्तम् ।

---

## अथागन्तुजपक्षवधनिदानम् ।

तत्रादौ संख्यासम्प्राप्तिमाह—

भिषग्भिर्गदितो दोषा-गन्तुकारणतो द्विधा ।
विशेषतः पक्षवध-स्तत्राद्यो दोषजः पुरा ॥ १ ॥
वातव्याधौ विनिर्दिष्टो-ऽधुनाऽऽगन्तुज उच्यते ।
सोऽपि कारणभेदेन-प्रोक्तो वैद्यैश्चतुर्विधः ॥ २ ॥
तत्राद्यो रससंजातो-द्वितीयो नागजः स्मृतः ।
इन्द्रियोत्थविकारोत्थ-स्तृतीयस्तु ततो मतः ॥
व्यापारिकविकारोत्थ-श्चतुर्थः परिकीर्त्तितः ॥ ३ ॥

रसहेतुजपक्षवधनिदानमाह—

अनारतं यत्र भवेद् रसस्य सं-स्पर्शोऽधिकस्तद्गतधूमसेवनम् ।
तत्रोद्गमः पक्षवधस्य चेत् स्यात् तदा स वैद्यै रसहेतुजः स्मृतः ॥४॥

रसहेतुजपक्षवधमाह—

बलप्रणाशो भुजयोस्तु पूर्वं-ततः प्रकम्पोऽथ च सक्थिमध्ये ।
स्याद्वेपनं नूनमतः परं तु-प्रकम्पनं सर्वशरीरवर्त्ति ॥ ४ ॥
द्रव्यं ततो नैव दृढं ग्रहीतुं-किञ्चित् क्वचिद्रोगिजनः क्षमेत ।
न व्यक्तरूपेण हि वक्तुमीष-न्न चर्वितुं च प्रभवेत् कदा चित् ॥५॥

नृत्यं प्रकुर्वन्निव च प्रगच्छे-न्निद्रालुता तस्य ततः प्रकम्पः ।
बलप्रणाशोऽनलमन्दता चो-क्लेशोऽपि लालासरणं रदच्युतिः ॥६॥
एतानि चिह्नानि भिषङ्मतानि-स्युः पक्षनाशे रसहेतुजाते ।
संधारितेऽङ्गेऽत्र करादिभिः स्या-त्कम्पस्य शान्तिर्गदिनोऽपि नूनम्॥७

अथ नागहेतुजपक्षाघातनिदानमाह—

चित्रादिकर्माणि सदैव नागैः-कुर्वन्ति ये शिल्पिजना अगत्या ।
किंवा भवेत्सीसकसंनिबद्धा-वृत्तिर्यदीया प्रतिवासरं हि ॥ ८ ॥
ये चापि मोहादथवा कुवैद्यै-रशुद्धनागोद्भवभस्म दत्तम् ।
अदन्ति दैवादिह तेषु नूनं प्रजायते नागजपक्षघातः ॥ ९ ॥

अथ तस्य लक्षणमाह—

आदौ समारभ्य तुरङ्गुलीभ्यो व्याप्नोति नूनं मणिबन्धमेषः ।
उक्तो गदानामतिदारुणोऽपि-प्रायेण नागैकनिमित्तजातः ॥१०॥
जायेत दौर्बल्यमतीव तत्र-प्राधान्यतो लक्ष्म तथांऽसदेशे ।
प्रकोष्ठमध्येऽपि च तोद एव-स्यात्स्रंसनं बाहुयुगेऽप्यवश्यम् ।
शूलञ्च नीलत्वमपीह दन्त-वेष्टे भवेन्नागजपक्षघाते ॥ ११ ॥

अथेन्द्रियोत्थविकारोत्थपक्षाघातनिदानमाह—

मस्तिष्कस्य गतिक्षेत्रे-सुषुम्णाशीर्षकेऽथवा ॥ १२ ॥
शोथोऽर्बुदं तथा रक्त-स्रुतिः क्षीणत्वमेव च ।
अथवा तत्समीपस्था-वयवस्य च शूनता ॥ १३ ॥
स्याच्चेत्तेन गतिक्षेत्र-तन्तूनां त्रुटनं भवेत् ।
किंवाऽवरोधस्तस्मात्तु-गत्यभावोऽभिजायते ॥ १४ ॥
ततः पक्षवधो जाये-तेन्द्रियोत्थविकारजः ।
पूर्वोक्तान्येव लिङ्गानि ज्ञातव्यानीह सूरिभिः ॥ १५ ॥

व्यापारिकविकृतिजपक्षाघातमाह—

व्यापारिकविकारोत्थ-पक्षाघाताभिधे गदे ।
गतिक्षेत्रे न विकृतिः परिदृश्येत का चन ॥ १६ ॥
किन्तु मानसिकक्षेत्रे-सैवालोक्येत केवला ।
गत्यर्थं मनसाऽऽज्ञप्तं गतिक्षेत्रं क्षमं यतः ॥ १७ ॥
ततो मानसिकक्षेत्रे विकृते तद्ददाति नो ।
गतितन्तुभ्य आज्ञां नौ यस्माद्भवति किं चन ॥ १८ ॥

काय नहि शरीरेऽस्मि-न्नत एव प्रजायते ।
शैथिल्यं मांसपेशीनां पक्षाघातामयप्रदम् । १९ ॥
एवं च पक्षाघातीय-लक्ष्मसंघातसंभवः ।
स्यादतोऽयं गदः कष्ट-प्रदः प्रोक्तो हि मानसः ॥ २० ॥

इति माधवनिदान परिशिष्टे आगन्तुजपक्षाघातनिदानं समाप्तम् ।

---

## अथाचलवातनिदानम् ।

ययैव संस्थया जनो-विमोहमाप्नुयाद्धि चेत् ।
ततोऽप्यनन्तरं तयैव च स्थितिं लभेत वै ॥ १ ॥

सा क्लेशकारिण्यपि चेत्स्थितिः स्यात्-तदा स रोगोऽचलवातनामा ।
निदानविद्भिर्बहुशो भिषग्भिः संकीर्त्तितोऽथापरिवर्त्तकोऽपि । २ ॥
अपि चाचलसंस्थाना-ह्वयस्तथा तादवस्थ्यगदनामा ।
इत्यभिधानचतुष्टय-मुक्तं विज्ञैः क्रियावशतः ॥ ३ ॥
वातागतेश्चापरिवृत्तिहेतो-स्तथासमस्थानत एव नूनम् ।
चतुर्विधं नाम च पूर्वभाव-स्थितेः कृतं वैद्यवरैः सहेतुकम् ॥४॥

अस्य निदानम्—

संचिन्तनाद्वाऽतिभयात्तथा च-संक्षीणधातुत्वत एव लोके ।
क्षयाद्धि सत्त्वस्य च बीजदोषा-दुत्पद्यतेऽद्धाऽचलवातरोगः ॥ ५ ॥

अस्य लक्षणम्—

स्पर्शाज्ञत्वं दृढता-पेशीनां स्यादचेष्टितं नियतम् ।
आक्षेपेण विना वै-मूर्च्छाऽचलवातसंज्ञके रोगे ॥ ६ ॥
प्राक् संस्थया तु गदिनः-स्थितिरित्यस्य विशेषचिह्नमुक्तम् ।
श्वासाधिक्यं जातु-क्षुद्रत्वं स्याद्धमन्यां वै ॥ ७ ॥
प्रागूरूपेण विनैव-व्याधेः सहसोदयोऽप्यत्र ।
ग्रीवास्तम्भः शूलं-शिरसि कदाचिच्च चेतसश्चलता ॥ ८ ॥
इति संक्षेपेणाचल-वातनिदानं निदानबुधसिद्धम् ।
माधवनिदानपरिशि-ष्टे सुस्पष्टं विनिर्दिष्टम् ॥ ९ ॥

इति माधवनिदानपरिशिष्टेऽचलवातरोगनिदानम् ।

---

## अथ स्नायुशूलनिदानम् ।

तत्रादौ तस्य परिचयः—

स्नायुष्वथवा शश्वत्-तच्छाखासूपजायते घोरा ।
पीडा प्राणपीडनी-गदिता सा स्नायुशूलाह्वा ॥ १ ॥

व्याधेः स्थानम्—

सदा मस्तकस्याथ बाह्वोश्च सक्थ्नो-
स्तथाऽन्यस्य चाङ्गस्य नूनं जनानाम् ।
त्वचानिम्नभागस्थितस्नायुमध्ये
गदोऽयं भवेत् स्नायुशूलाह्वयोऽत्र ॥ २ ॥

प्रजायेत वै प्रायशोऽङ्गेषु सर्वे-ष्वयं तीव्रप्राणप्रपीडाप्रदायी ।
विशिष्टाङ्गजातस्य चास्याभिधेया-न्यपि स्युर्विशिष्टानि शिष्टोदितानि ३
क्रमादूर्ध्वभेदस्तथैवार्धभेदो-ह्यधोभेद एवामयानां समेषाम् ।
नृणां मुण्डमुण्डार्धकस्फिग्भवानां-भवेयुर्भवेऽमूनि नामानि नूनम् ॥४॥

ऊर्ध्वभेदस्य निदानम्—

बलक्षीणतातोऽथ रक्तक्षयाद्वा-नृणां वृक्कमस्तिष्कयोर्दोषतोऽपि ।
अजीर्णाच्च दन्तामयादूर्ध्वभेदा-भिधः स्नायुशूलो गदो जायतेऽत्र ॥५॥

तस्य लक्षणम्—

ललाटे पुटेऽक्ष्णोऽप्यधोभागमध्ये-तथैवाधिगण्डं च दन्तच्छदे वा ।
रदे वाऽधरे शूलवद्दाहवद् र-सनापार्श्वमध्ये भवेद् वेदना या ॥ ६ ॥
सुघोरा भविष्णुर्भृशं चैकपार्श्वे-क्रमेणैधिनी चास्यसंबन्धिभागे ।
सदैवोर्ध्वभेदाभिधोदीरिता सा-ऽगदङ्कारत्नैरनूत्नैर्विविच्य ॥ ७ ॥

अस्यानुपशयः—

भृशं स्पर्शनाच्चातिशीतस्य वायो-र्विवर्द्धेत देहप्रकम्पाच्च नूनम् ।
विकारात्तथा स्नायुभेदस्य रोगो-भवेदङ्गभेदे विशेषान्नृदेहे ॥ ८ ॥

अर्द्धभेदस्य निदानम्—

सदैवार्द्रभूमिस्थितेश्चातिशीता-भिसंबन्धतो वा बलक्षीणतातः ।
प्रजायेत दुष्टस्य वातस्य नीर-स्य वा सेवनादर्द्धभेदो गदोऽयम् ॥९॥

तस्य लक्षणम्—

भवेद् वेदना व्याप्य याऽर्द्धं मुखस्या-निशं मण्डले तीव्ररूपा जनानाम् ।
अपि प्रायशो वामपार्श्वे प्रजाता-ऽर्द्धभेदो गदः सा प्रकीर्त्त्येत वैद्यैः॥१०॥

व्यथेताशुगेनेव विद्धं शिरोऽद्धा-नृणां दारुणं तीव्ररूपेण पूर्णम् ।
कदाचित् क्रमं चावलम्ब्य प्रशस्तं-विरामो महान् वा प्रजायेत चात्र ११
अपि प्रायशो योषितामेव रोगो-वपुष्येव जातः प्रदृश्येत लोके ।
वयःस्थेऽथ वौ यौवने वाऽस्य भूम्ना-भवेदुद्भवोऽप्यामयस्य स्वभावात्१२

अधोभेदस्य निदानम्--

सदा विड्विबन्धाच्छ्रमाच्छीतयोगा-त्तथा वाऽऽमवाताच्च दौर्बल्यतोऽद्धा ।
अथार्द्रस्थलावस्थितेर्गर्भदोषा-दधोभेदनामोपजायेत रोगः ॥ १३ ॥

तस्य लक्षणम्—

अधिस्फिक् तथा चोरुजानुस्थसन्ध्योः-पदे पश्चिमे वा क्वचिच्चाधिजङ्घम् ।
प्रजायेत यच्छूलमुच्येत वैद्यै-रधोभेदनामा गदो वै तदेव ॥ १४ ॥
भवेत्प्रायशः सक्थिन सर्वत्र चैक-तरे रात्रिमध्ये बली शूल एषः ।
अपि प्रौढ एव प्रजायेत भूम्ना-वयस्यामयः स्नाय्वधोभेदनामा ॥ १५ ॥

इति माधवनिदानपरिशिष्टे स्नायुशूलनिदानं समाप्तम् ।

---

## अथ हृद्यन्त्ररोगनिदानम् ।

तत्रादावावरणिकलक्षणम्—

वृक्कस्य दोषादपि चामवातात्-तथाऽऽर्द्रशीतस्थलसन्निवासात् ।
हृत्कोष्ठसंबन्धिकलाविभागे-जायेत रोगो भृशदारुणोऽयम् ॥ १ ॥
रोगेण चानेन कला तु तत्र-प्रपीड्यते सत्वरमेव नूनम् ।
तेनोष्णता स्यादथ शोथदाहौ-तथोष्णता दुर्बलता च गौरवम्॥२॥
श्वासस्य कृच्छ्रत्वमतीव पीडा हृत्कोष्ठकम्पः कसनं विशेषाद् ।
नासापथेनास्रमपि स्रवेच्च-शाखासु शोथोऽनलमन्दताऽपि ॥ ३ ॥
भवेत्तु विषमा गतिर्यदि हि नाडिकायाः क्वचिद्-
धृदावरणिकस्तदा निगदितो गदः कोविदैः ।
चिकित्स्यत इह द्रुतं स किल जातमात्रः सदा
ऽन्यथा मरणदो नृणां भणित एव चोपेक्षया ॥ ४ ॥

कोष्ठयकहृद्यन्त्ररोगलक्षणम्—

सदाऽभिघातादथवाऽऽमवाता-त्तथैव पूर्वोदितलक्षणाद्धि ।
प्रजायते हृद्गतकोष्ठमध्ये-यतस्ततः कोष्ठयक एष उच्यते ॥ ५ ॥
अस्मिन् गदे स्यादरुचिर्ज्वरोऽथो-वैवर्ण्यमङ्गेऽनलसंक्षयोऽपि ।

श्वासोऽथ कम्पः कसनं च दाहो-यक्ष्माऽधिकोष्ठं ननु पूयसंचयः ॥६॥
आक्षेपमूर्च्छे अपि च प्रलापो-नूनं धमन्या विषमा गतिश्च ।
अस्माद्गदाद् घोरतरात्कदाचिद्-विमुच्यते कोऽपि गदी तु दैवात् ॥७॥

पृथुकहृद्यन्त्ररोगलक्षणम्—

मिथ्यानिजाहारविहारहेतो-र्हृत्कोष्ठमध्येऽस्रगतिर्यदैव ।
स्याद् व्याहता तर्हि समस्तपेशी-हृदः प्रयायात्पृथुतामवश्यम् ॥८॥
ततश्च रुक्कम्पनदुर्बलत्वा-न्यपि स्युरद्धा हृदये तथैव ।
श्वासस्य कृच्छ्रत्वमथो भ्रमश्चा-रतिः प्रमोहः पृथुकामये हृदः ॥९॥

आयामिकहृद्यन्त्ररोगलक्षणम्—

स्याद् विस्तृतिर्हृदयकोष्ठगता तु यस्मि-
न्नायामिकः स गदितो गद आमयज्ञैः ।
प्रायेण दारुणतया परिवर्णितेऽस्मिन्
मूर्च्छा भ्रमः श्वसनहृद्द्रुतवेपथू च ॥ १० ॥

शून्यत्वमप्यवयवेष्वनलस्य मान्द्यं हानिर्बलस्य पललस्य परिक्षयोऽपि ।
उन्निद्रताऽथ सलिलोदररोगजन्मा-न्यानि स्युरत्र हृदयामयलक्षणानि ११

परिक्षयहृद्यन्त्ररोगलक्षणम्—

क्षयाद् यतो जायत एष रोग-स्ततोऽतिघोरः कथितः परिक्षयः ।
हृत्कोष्ठपेश्या इह संक्षयः स्याद् भ्रमोऽवसादोऽपि च दुर्बलत्वम् ॥१२॥
श्वासोऽग्निमान्द्यं हृदयप्रकम्पः-शोथस्य नूनं क्रमिकाभिवृद्धिः ।
जायन्त एतानि परिक्षयेऽस्मि-स्तथाऽपरेऽपि स्युरुपद्रवाश्च ॥ १३ ॥

मेदःसूत्रहृद्यन्त्ररोगलक्षणम्—

यदा तु हृत्कोष्ठगतेषु मांस-सूत्रेषु मेदःकणसञ्चयः स्यात् ।
तदा गदज्ञानविदा स मेदः-सूत्राभिधेयो गदितो गदोऽत्र ॥ १४ ॥
अस्मिन् गदे स्याद्धृदयप्रकम्पो-मन्दाऽवलोक्येत गतिश्च नाड्याः ।
मूर्च्छाऽवसादो नियतं भ्रमश्च-बलक्षयोऽलं किल नाडिकानाम् ॥ १५ ॥
अन्ते हृदोऽप्यावरणस्य नूनं-संभेदतः स्यात् सहसैव मृत्युः ।
सद्यश्चिकित्स्योऽयमतश्चिकित्सा-विधानदक्षैरतिदारुणो गदः ॥ १६ ॥

विक्षेपिकाहृद्यन्त्ररोगलक्षणम्—

हृदाक्षेपिका यत्र पीडा भवेद्ध-स विक्षेपिकाख्यो गदः संप्रदिष्टः ।
प्रजातेऽत्र रोगेऽतिघोरे नृदेहे-त्वधोभागमध्ये ह्युरोऽस्थ्नोऽधिकोष्ठम् ॥१७॥

अथो वामबाहौ तथा वामभाग-स्थितांसास्थिमध्येऽपि पृष्ठप्रदेशे।
अधिग्रीवमुग्रा भृशं प्राणमर्म-प्रपीडिन्यवश्यं प्रजायेत पीडा ॥ १८ ॥
समाकर्षतोदौ तथा खेददाहा-वभीक्ष्णं च निःश्वासरोधोऽथ मोहः।
भृशं निर्गमः स्वेदशीकरेरथाऽश्मा-नमानाहवैवर्ण्यकार्श्यान्यवश्यम् ॥१९॥
स्युरत्रारुचिश्चेन्द्रियाणां क्रमेण-प्रणाशोऽपि मृत्युं लभेताजिताक्षः।
मयेत्थं तु हृद्यन्त्ररोगोत्थितानि स्मृतानीह चिह्नानि चोक्तानि कृत्स्नम्॥२०

उपसंहारः—

स्युरेवं भृशं हृद्गदा दारुणा वै-सुसाध्यास्त एवात्र वैद्यैर्नवा ये।
तथा वर्जिताः सर्वदोपद्रवैर्वा-चिकित्सा चतुष्पादवाप्तिप्रसङ्गात् ॥२१॥
अतोऽन्ये चिरोत्था निजोपद्रवैर्वा-युताः सर्वहेतुप्रजाताश्च ये स्युः।
क्रमेणैव कृच्छ्रास्तथा ते तु याप्या-असाध्या बुधैर्बोधिता नूनमेव ॥२२॥

इति माधवनिदानपरिशिष्टे हृद्यन्त्ररोगनिदानं समाप्तम्।

---

## अथ यकृद्रोगनिदानम्।

यकृतः परिचयः—

यकृतोऽवस्थितिरनिशं-दक्षिणतः स्याद्धो हृदयात्।
तत्र तु विविधा रोगा-जायेरन् भूरिदुःखदा नियतम् ॥ १ ॥

यकृद्रोगनिदानम्—

मद्यातिपानादथ वेगरोधा-दत्युष्णगुर्वन्ननिषेवणाच्च।
स्वापाद्दिवा जागरतोऽथ रात्रा-वतिव्यवायादभिघाततो वा ॥ २ ॥
गुरून् पदार्थान् वहतां नराणां-सदैव मार्गक्रमणे रतानाम्।
तथाऽपरैर्घोरतरैश्च कर्मभि-र्भवन्ति नूनं यकृदुत्थिता गदाः ॥ ३ ॥

म्लानावस्थायां यकृतो लक्षणम्—

म्लाने यकृत्यथ भवेत् शकृदप्रवृत्तिः-
पित्ताल्पताऽप्यतितृषाऽऽविलमूत्रता च।
देहस्य कर्दमसमप्रभताऽथ पाण्डु-
त्वाऽस्मानसादवमनान्यनलस्य मान्द्यम् ॥ ४ ॥
प्रातश्च तिक्तमुखता रसना मलाढ्यो-
द्गारो भृशं कठिनता धमनीगता स्यात्।
आकृष्टिवद्गुरुजाऽपि वमेश्चिकीर्षा-

लिङ्गान्यमूनि नितरां ननु संभवेयुः ॥ ५ ॥

वृद्धिदशायां यकृतो लक्षणम्—

वृद्धिं गते यकृति चोरु रुजाऽप्युरोऽस्थिन
स्कन्धेऽधिदक्षिणमथापि च दक्षसक्थिन ।
जायेत जाड्यमपि दक्षिणबाहुमध्ये
वैवर्ण्यमप्यधिशकृत् कसनं ज्वरश्च ॥ ६ ॥
तिक्तास्यताऽप्यरतिलोहितमूत्रते वा
हानिर्बलस्य तनुबद्धपुरीषताऽपि ।
पीताक्षताऽथ सततं शयनं तु सव्य-
पार्श्वेन चात्र गदिनः सुखलिप्सया स्यात् ॥ ७ ॥
निद्रानाशः कामला तोदभेदौ-दाहः शोथो जायते चात्र तृष्णा ।
प्राणघ्नी स्याद्विद्रधिर्वै यकृत्स्था-प्राणी मुच्येतात्र कश्चित् सुभाग्यात् ॥८॥

इति माधवनिदानपरिशिष्टे यकृद्रोगनिदानं समाप्तम् ।

---

## अथ वृक्करोगनिदानम्—

वृक्कस्य पूर्वरूपं—

निद्रानाशो वह्निमान्द्यं च शोथो नेत्रे चास्ये पादयोर्वृक्करोगे ।
नाडी स्तब्धा वेगयुक्ताऽथ चोष्णा-त्वाचं रौक्ष्यं पूर्वरूपं प्रदिष्टम् १

वृक्करोगस्य लक्षणम्—

रक्तह्रासात्पाण्डुवर्णत्वमास्ये स्वेदाभावस्त्वाचरौक्ष्याग्निमान्द्ये ।
पीडा कट्यां चोदरे वृक्कदेशे-नाडी नूनं वेगयुक्ता भवेच्च ॥ २ ॥
मूत्रं शश्वद्बिन्दुरूपेण चोष्णं-पीडायुक्तं वृक्करोगे स्रवेद्वै ।
एवं तीव्रं लक्षणं वृक्कयुग्मे-जातु स्यादेवाश्मरीयोगतोऽपि ॥ ३ ॥
शिश्नस्याग्रे जायते चाति पीडा-मूत्रं रक्तेनान्वितं स्यात् कदाचित् ।
शैत्योपेतं पाणिपादं भवेद्वै-दाहश्चाल्पो मूत्रकाले ध्वजाग्रे ॥ ४ ॥
वृक्कद्वन्द्वे कार्यशैथिल्यहेतो-र्घोरः स्वैः स्वैर्लक्षणैर्लक्ष्यमाणः ।
रोगः प्लीह्नो ह्यकृत्सम्भवो तु-र्वृक्कग्रस्तस्येति चिह्नं प्रदिष्टम् ॥ ५ ॥
नादः कर्णे नेत्ररोगो ध्वजोत्थो-भङ्गः शाखागौरवं चापि मूर्च्छा ।
ग्रीवामूर्ध्नोश्चांसदेशेऽपि पीडा मोहो लिङ्गान्येवमेतानि च स्युः ॥ ६ ॥

विशेषतो वृक्करोगो रक्तस्य परिवर्त्तनात् ।
नराणां जायते देहे भिषजामिति निर्णयः ॥ ७ ॥

इति माधवनिदानपरिशिष्टे वृक्करोगनिदानं समाप्तम् ।

## अथ शुक्रमेहनिदानम् ।

तत्र शुक्रमेहे हेतुः—

ये हस्तमैथुनमुखातिविगीतरीत्या-रेतःक्षयं विदधतीह जना विमूढाः ।
तेषामवश्यमतिकामवशं गतानां- जायेत दारुणगदः खलु शुक्रमेहः ॥१॥

तस्य लक्षणम्—

मलमूत्रमनोजजवाधिकता-युवतिस्थविलासदृढस्मृतितः ।
पतनं यतनेन विनैव मुहु-र्ननु रेतस आशु भवेदनिशम् ॥ २ ॥
अथवा प्रमदाऽङ्गमपि स्पृशतः-सहसा तरुणीजनदर्शनतः ।
स्वपने रमणीरमणेक्षणतः-स्खलनं पुरुषस्य भवेत् क्षणतः ॥ ३ ॥
अधितन्द्रमथाप्यधिवर्त्म यतः-शयनं च जनस्य मनोजवतः ।
स्मरणादवलोकनतोऽप्यचिरा-च्च्यवनं प्रमदात् प्रमदाविषयात् ॥ ४ ॥
अहोरात्रमध्ये प्ररूढे गदेऽस्मिन्-नरस्य त्रिवारं चतुर्वारमद्धा ।
उपर्युक्तहेतोश्च्युती रेतसः स्यात्-क्वचिल्लिङ्गशैथिल्यमन्ते नितान्तम्॥५॥
ततोऽनेन रोगेण संव्यूढदेहो-जनो भामिनीमानभेदेऽत्यशक्तः ।
भवत्यङ्गनाऽङ्गस्य संस्पर्शमात्रा-च्च्युतिं रेतसो नूनमत्राभ्युपैति ॥ ६ ॥
ततोऽतीव लज्जाविषादाभिभूतः—पराभूतचेता भृशं कामिनीतः ।
विरक्तो भवाज्जातु विक्षिप्तगत्या-स्वयं यानथो मृत्युमीप्सेदगत्या ॥७॥

शुक्रमेहस्योपद्रवाः—

वह्नेर्मान्द्यं मूत्रवर्चोऽवरोधो-दृष्टेर्ह्रासो नीलिमाऽल्पोऽप्यजीर्णम् ।
चातीसारो घूर्णनं मस्तकस्थं-मेहे शुक्रस्योपसर्गा इमे स्युः ॥ ८ ॥

इति माधवनिदानपरिशिष्टे शुक्रमेहनिदानं समाप्तम् ।

## अथौपसर्गिकमेहनिदानम् ।

तस्य परिचयः—

औपसर्गिकमेहाख्यो-गदो यः स भिषग्वरैः ।
पूयमेहो व्रणमेह-श्चागन्तुमेह उच्यते ॥ १ ॥

संप्राप्तिः—रजस्वलायां बहुभुक्तवत्यां-तथाऽऽर्द्रयोनौ मदनातुरो यः ।

 

प्रयातु मोहाद् यदि कोऽपि तर्हि-ध्रुवं गदं दारुणमेतमेतु ॥२॥
या मूत्रनाडयन्तरसंस्थिता त्वक्-श्लेष्मावहा सा व्रणिता सती तु।
क्लेदं गदेऽत्राहरति प्रकामं-ततो भिषग्भिर्व्रणमेह उक्तः ॥ ३ ॥
लक्षणं—प्रायः स्त्रीसङ्गदिष्टं मुनिमितरजनीकाल आरभ्य रोगो-
जायेतायं कदाचिद् विपुलतररुजाव्यञ्जकः पूरुषेषु।
वारं वारं ध्वजस्योत्थितिरपि महती शिश्नमुण्डे च कण्डूः-
किञ्चासह्या भृशार्त्तिर्भवति हि सततं मूत्रकाले गदेऽस्मिन् ४
स्फीतो मेढ्रो लोहितश्चाग्रभागे-पीडायुक्तावण्डकोशौ सदैव।
पूयस्योपस्थात् प्रवृत्तिविशेषात्-संजायेतात्रापि तुल्यं व्रणेन ॥ ५ ॥
सदा रक्तपिप्पल्यतीवानुलिप्तं-सुखं शिश्नसंबन्धि संदृश्यतेऽत्र।
गदी चापि रात्रिन्दिवं दाहयुक्तः-कदाचिन्न शान्तिं क्वचित्प्राप्नुयाद्वै ॥६॥
यदा पूयसंशोषजो मूत्रमार्गा-वरोधो भवेद् घोरदाहेन मूत्रम्।
तदा युग्मधारं प्रवर्त्तेत नूनं-युतानां व्रणाख्येन मेहेन यूनाम् ॥ ७ ॥
आर्द्रं तथा चिमचिमान्वितमामयेऽत्र-प्रस्राववर्त्म सततं नियतं भवेद्वा।
स्रावस्ततस्तनुरपि क्रमतः प्रवृद्धि-र्लक्ष्येत तस्य गदितं किल लक्ष्म चेति॥
रोगश्चायं दारुणः पूरुषाणां-प्रायेणोत्पद्येत संसर्गतोऽपि।
पीडाऽल्पत्वं कालवृद्धिक्रमेण-स्यादस्यालं दुश्चिकित्स्यत्वमेव ॥ ९ ॥
व्रणमेहे विनिर्दिष्टा-आमनेत्रामयादिकाः।
उपद्रवा विशेषेण नाशनीया भिषग्वरैः॥ १० ॥

इति माधवनिदानपरिशिष्टे औपसर्गिकमेहनिदानं समाप्तम्।

---

## अथ भृशोष्णवातनिदानम्।

अस्य परिचयः—

मूत्राध्वना यत्र विनिर्गमः स्यात्-पूयस्य पुंसु प्रमदाजनेषु।
योन्यध्वना चापि भृशोष्णवातः-संसर्गजस्तीव्रगदः स उक्तः॥१॥

भृशोष्णवातस्य कारणम्—

कीटाणवो युगलबिन्दुनिभा निदानं-त्वस्यामयस्य गदितं गदलक्ष्मविद्भिः।
स्यान्मैथुनेन खलु संक्रमणं सदैत-द्रोगार्दितप्रमदया सह पूरुषेषु ॥ २ ॥
तथा जनन्या गदियोनिमार्गा-दुत्पद्यमानेषु शिशुष्ववश्यम्।

विलोक्यते संक्रमतोऽक्षिपाको भृशोष्णवातस्य च लोकमध्ये ॥३॥

संप्राप्तिमाह—

रोगाक्रान्तवराङ्गमैथुनवशात कीटाणवोऽस्यामय-
स्याशास्ते जननेन्द्रियेऽपि च तदन्तःस्थां कलां श्लैष्मिकीम् ।
निर्दग्धां विदधत्यथास्पदमरं दग्धं भवेत्पूययुक्
तत्पश्चाच्च शनैः शनैरविरतं संवर्द्धमानो गदः ॥ ४ ॥
मूत्रस्थानमनुप्रयाति च तदा मूत्रस्य मार्गं क्रमा-
न्नृग्रन्थिं च तथाऽण्डकोशयुगमाक्राम्यन् भृशं दारुणः ।
एवं तत्र भवेत कदाचिदपि वै शोथोऽथ पूयादिकं-
किं चाप्यस्य गदस्य शोणितमिताः कीटाणवो जातु चित् ॥ ५ ॥
कुर्वन्तीह हि सन्धिशोथमपि-सैप् टीसीमियां कुत्रचित्
कृत्वा रोगिजनस्य मारणकृतो नूनं भवन्ति द्रुतम् ।
किं चाप्यस्य गदस्य पाकसमयो वैद्योत्तमैर्भाषितो·
ज्ञातव्यो वसुवासरावधिरहोयुग्मादपि प्रायशः ॥ ६ ॥

भृशोष्णवातस्य लक्षणम्—

प्रदाहो रुजा मूत्रमार्गेऽपि पूया-गमः शिश्नमुण्डे च शोथः किल स्यात् ।
कटिश्रोणिदेशोत्थिता चापि पीडा-ज्वरस्यागमो मूत्रमार्गस्थितायाम् ॥
कलायां च शोथो ध्रुवं श्लेष्मलाया-मथो मूत्रकृच्छ्रश्च रक्तस्य मेहः
तथा मूत्ररोधो गदस्याग्रगत्वं-ततः पौरुषग्रन्थिमध्येऽपि शोथः ॥ ८ ॥
तथैवाशये रेतसो ग्रन्थिभागे-यदोपद्रवै रेभिरासेवितः स्यात् ।
जनः कोऽप्यवस्था तदा तस्य दुःख-प्रदाऽऽविर्भवेन्नो भवेद्रोगशान्तिः॥९॥
अथो सा कदाचित्कथं चिद् यदि स्यात् तदा सौत्रिकैस्तन्तुभिर्मूत्रमार्गः ।
प्रजायेत संकीर्ण आश्वेव तस्मात् प्रदाहादिभिर्दुःखितश्चापि रोगी ॥१०॥
ततो जीवनं नारकौपम्यमेव स्वकीयं स जानाति तद्दुःखतप्तः ।
अतः सद्य एवामयस्यास्य वैद्यैः सदाऽऽरम्भकाले चिकित्सा विधेया ॥
डिम्बप्रणाल्यां परिविस्तृतासु कलासु योषित्सु हि योनिमार्गे ।
गर्भाशये जायत एष रोगो भिषग्वराणामिह निर्णयोऽयम् ॥ १२ ॥

उपद्रवाः—

शुक्रग्रन्थिष्वाशये रेतसोऽथो-शोथोऽवश्यं पौरुषग्रन्थिमध्ये ।

मूत्रस्यालं पूर्णता मूत्रधाम्नि-प्रादुर्भावो विद्रधीनां विशेषात् ॥१३॥
मूत्राध्वानं सर्वतोऽथ प्रभिन्नै-स्तैरुत्पत्तिश्चोग्रशोथस्य तत्र ।
किंवा नाडीसंज्ञकस्य व्रणस्यो-द्भूतिर्भूयो दुःखदस्यापि नूनम् ॥१४॥
भृशोष्णवाते भृशदुःसहे सदा-गदेऽगदङ्कार-वरैरुपद्रवाः ।
उदीरिता एत उदारबुद्धिभि-र्द्रुतं चिकित्स्या अपि यत्नपूर्वकम् ॥१५॥
इति माधवनिदानपरिशिष्टे भृशोष्णवातनिदानं समाप्तम् ।

## अथौजोमेहनिदानम् ।

अथामवातादभिघाततो वा-ऽजीर्णादिकाज्जाठरवह्निमान्द्यात् ।
शोथात्तथा वा विषमज्वराच्च-क्षयाच्च कासप्रभृतेर्नराणाम् ॥ १ ॥
रक्तस्रोतोविक्रियातोऽस्रदोषात्-किंवा वृक्कद्वन्द्वदुष्ट्या विशेषात् ।
पूयेनास्रेणाथवा वै लसीका-द्वारा दुष्टे रेतसा वाऽपि मूत्रे ॥ २ ॥
क्षारेण किंवा कटुना कषाये-णवर्जितैर्गर्भवतीजनस्य ।
ओजस्करैर्वा मधुरैः सदैवा-न्नपानजातैरतिमात्रभक्षितैः ॥ ३ ॥
गुरोस्तथा पर्युषितस्य चान्न-स्य सेवनादप्यतिभोजनाद्वा ।
शिशोश्च हंसस्य विशिष्य गोधू-मनव्यधान्यप्रभृतेश्च सेवनात् ॥ ४ ॥
अतीवशीते सलिलेऽपि दुष्टे-स्नानेन पानेन च वाऽवगाहनात् ।
एभिर्निमित्तैरपरैस्तथौजो-मेहो भवेद्धै विकृतादिहौजसः ॥ ५ ॥
आयुर्बलयोर्नितरां-कृन्तननिपुणो विशेषतो नृणाम् ।
आमय एष उदारै-रायुर्वेदस्य कोविदैरुदितः ॥ ६ ॥
पुनश्च तस्य हेतुपूर्वकरूपवर्णनम्—
शारीरिकश्रमवशादथवाऽपरस्मा-द्धेतोर्द्रुतं रुधिरसंचरणाज्जनानाम् ।
किंवा विपर्ययवशात्प्रकृतेः किलौजो-मूत्रेण सार्द्धमतिदुष्टिमितः स्रवेद्धै ॥
हंसाण्डसंस्थितसमुज्ज्वलभागतुल्यं-
किंवाऽपि तण्डुलजलप्रतिमं च शुक्लम् ।
ओजःस्थितं भवति रूपमिदं तदानी-
मित्थं गदन्ति गदतत्त्वविदां कुलानि ॥ ८ ॥
अस्य साध्यादिकम्—
मेदःक्षयो यदि भवेदरुचिर्ज्वरो वा-
शोथोऽग्निमान्द्यमपि तर्हि न साध्य एषः ।

दुःसाध्य एव कथितोऽत इहान्यथौजो-
मेहो भिषग्भिरथ न क्वचिदाशु साध्यः ॥ ९ ॥

इति माधवनिदानपरिशिष्ट ओजोमेहनिदानं समाप्तम् ।

---

## अथ लसीकामेहनिदानम् ।

अनूपदेशोद्भवमीनमांसा-दिकादनाद्वाऽमितभोजनाद्वा ।
क्लिन्नं सदा पर्युषितं भृशाभि-ष्यन्दि प्रकामं मधुरं गरीयः ॥१॥
अन्नं विशेषाद्रसनाऽतिलौल्यात् समश्नतामत्र नृणामवश्यम् ।
तथा च शारीरपरिश्रमं वा-ह्यकुर्वतां वा मनसोऽधिकश्रमात् ॥२॥
प्रदूषितो हेतुभिरेभिरन्यैः पाकाशयश्चापि यकृन्नितान्तम् ।
वृक्कद्वयेऽथापि च मूत्रकोषे क्षतं समुत्पादयतो विशेषतः ॥ ३ ॥
ततश्च मूत्रं तरलं सरक्तं-लसीकया वा सहितं च मेदसा ।
क्वचिद्घनं स्थूलमथापि सूत्रव-ज्जतूकवारिप्रतिमं प्रवर्त्तते ॥
वैशिष्ट्यतोऽस्मिन्नपि दोषदूष्ययोः-र्ह्रासं प्रवृद्धिं च सदैव लक्षयेत् ।
कुर्याच्चिकित्सामवगत्य वैद्यो मूत्रस्थितं वर्णविशेषमेव ॥ ५ ॥

वातजस्य तस्य लक्षणम्—

वातोपसृष्टेऽत्र भवेद्धि मूत्रं-सशोणितं पूर्णतयाऽम्लगन्धकम् ।
मलावरोधोऽपि च संधिवृन्द-विश्लेषणं चाप्युपजायतेऽद्धा ॥
मुहुर्मुहुर्मूत्रमतिप्रवर्त्तते-गदे त्वमिक्षाजलसंनिभं सदा ।
इदं लसीकाऽभिधमेहरोग-स्य वातिकस्योक्तमशेषलक्ष्म ॥ ८ ॥

पित्तजस्य लक्षणम्—

घनं पूतियुक्तं च दुर्गन्धपूर्ण-भवेत्पैत्तिके रोगिमूत्रं च पूर्णम् ।
तथाऽऽस्यस्य वैरस्यमत्यर्थमेव-प्रदाहश्च हस्ताङ्घ्रिमध्ये सदैव ॥ ८ ॥

श्लैष्मिकस्य लक्षणम्—

कफेनोपसृष्टेऽत्र शुक्लं तु मूत्रं-भवेत्स्वच्छमत्यर्थमद्धाऽधिपात्रम् ।
निशि स्थापितं प्रातरेवोपरिस्थं-तदच्छं घनं सर्वथा चाप्यधःस्थम् ॥९॥
कटौ वङ्क्षणेऽनुक्षणं चापि पीडा-प्रजायेत तीव्रोऽन्नविद्वेष एव ।
इदं लक्ष्म सर्वं कफेनोपसृष्टस्य मेहस्य चोक्तं लसीकाऽभिधस्य ॥१०॥

द्वित्रिदोषजयोर्लक्षणम्—

द्विदोषोत्थितेऽथ त्रिदोषोत्थितेऽद्धा-यथादोषमूह्यं तयोर्लक्षणं वै ।

पुरा वर्णितं यत् पृथग्दोषरूपं-तदेवात्र बोध्यं यथावद्विमिश्रम् ॥११॥

साध्यासाध्यलक्षणम्—

लसीकाऽभिधोऽयं तु मेहो हि यूनां-बलेनान्वितानां विशेषान्नवोत्थः ।
अपि प्रायशः साध्य एवामयज्ञै-भिषग्भिर्जनैर्बोधितो बुद्धिमद्भिः ॥१२॥
स एवाथवा दुर्बलानां तु वृद्धा-त्मनां नैव साध्यः कदाचित्प्रदिष्टः ।
क्वचिच्चामयोऽयं गतः प्रौढभावं-प्रशान्ति प्रयायात् सुपथ्यस्य योगात् ॥
पुनर्दैवदुर्दष्टितो रोगयुक्तं स एवाधिगत्योत्थितिं स्वामवश्यम् ।
नयत्येव कालान्तरं चान्तकस्या-न्तिके सच्चिकित्सामतिक्रम्य सर्वाम् ॥

इति माधवनिदानपरिशिष्टे लसीकामेहनिदानं समाप्तम् ।

---

## अथ मूत्रातिसारनिदानम्

तस्य निदानम्—

अभिष्यन्दिगुर्वन्नसंभोजनाद्वा श्रमाभावतोऽथो विलासाद्विशेषात् ।
विचाराद्व्यवायात्तथा मद्यपाना-ज्जलस्यातिदुष्टस्य संसेवनाद्वा ॥१॥
गुडोत्थस्य नौ वस्तुनो भोजनाद्वा यकृद्दुष्टिहेतोश्च मर्माभिघातात् ।
विकारादथो नाडिकामण्डलस्या-भिचारप्रयोगाद्भयाच्छोको वा ॥२॥
सदा मानसस्य प्रवृत्तेर्भृशं विषयेषु स्वकीयेषु वेगावरोधात् ।
गराख्यस्य नूनं विषस्यापि योगाद् दिवास्वापतश्चातिनिद्राप्रसङ्गाव॥३॥
चिरं रोगिलोकस्य सेवाविधानात् तथा पत्तने सर्वदा संनिवासात् ।
अतीवोष्मसंतप्तदेहस्य शैघ्र्यात् सदा शीतसंसेवनादेव नूनम् ॥ ४ ॥
तथा चेदृशैः सेवितैश्चातिमात्रं निमित्तैरिहान्यैर्गदः प्रायशोऽयम् ।
प्रजायेत नृणां तनावेव मूत्रा-तिसाराभिधस्तस्य संप्राप्तिरग्रे ॥ ५ ॥

तस्य संप्राप्तिः—

उपर्युक्तहेतोरतीव प्रसङ्गाद् नृणां सर्वदेहस्थितोऽब्धातुरेव ।
गतः क्षोभभावं द्रुतं सोऽतिमात्रं समस्ताङ्गतः प्रस्रवत्याशवश्यम् ॥६॥
ततः प्रच्युतः स्थानतः स्वात्स मूत्र-पथं याति तेनातिमात्रं प्रसन्नम् ।
सितं शीतलं गन्धशून्यं च पीडा-विहीनं क्वचिन्मन्ददाहं कुगन्धम् ।
गदेनार्दितानां स्रवत्येव मूत्रं सदैवेदृशं पूरुषाणां विशेषात् ।
मयेत्थं च सद्भिर्भिषग्भिस्तु मूत्रा-तिसारस्य संप्राप्तिरुक्ता प्रदिष्टा ॥८॥

मूत्रप्रस्रवणमानम्—

अहोरात्रमध्ये चतुःप्रस्थतुल्यो-न्मितं मूत्रमस्मिञ्जनानां स्रवेद् वै ।
निशि स्थापितं प्रातरालोकितं तद् घनं निम्नभागे सुपर्यच्छमस्तु ॥९॥

मूत्रातिसारलक्षणम्—

भवेन्मूत्रमार्गेऽति कण्डूस्तथा पि-डिकोत्पत्तिरद्धाऽथवा दुःक्षुतं च
तथा तत्र चर्मक्षयो येन रोगी भृशं चावसीदेद्रुजा तज्जया तु ॥ १० ॥
अथाङ्गेषु दाहस्तृषा चाधिकाऽपि रसज्ञाऽपि शुष्का चिता कण्टकैश्च ।
क्वचित्तीव्रताऽग्नेः क्वचिद्वाऽग्निमान्द्यं प्रजायेत कार्श्यं तथा विड्विबन्धः॥
दृशोर्म्लानता रूक्षताऽधित्वचं पे-शिकाः कोमलाश्चातिशैथिल्यभाजः ।
शिरोघूर्णनं चालसत्वं च संको-चभावो हृदो मैथुनाशक्तता च ॥१२॥
बलक्षीणतोद्वेग आस्यस्य मालि-न्यमेवारतिः स्वीयकर्त्तव्यकृत्ये ।
परिक्षीणता मेदसश्चाधिकाऽऽस्ये प्रशोषस्तथा तालुनि स्यादवश्यम् ॥१३॥
इतीमानि चिह्नानि मूत्रातिसारो-दितानीह बोध्यानि चाद्धाऽखिलानि ।
तनौ चाबलानां गदोऽयं तु सोम-क्षयात् सोमनामाऽपि वैद्यैः प्रदिष्टः॥
अतीव प्रवृद्धे क्रमेणामयेऽस्मिन् स्रवेन्मूत्रमत्यर्थमेवाप्यभीक्ष्णम् ।
अतो रोगमेनं तु वैद्या हि मूत्रा-तिसारं च रोगानुसारेण प्राहुः ॥१५॥

मूत्रातिसारस्योपद्रवाः—

बलस्यातिनाशस्तृषा चातिघोरा प्रलापोऽपि मूर्च्छाऽथ वीसर्प एव ।
क्षतं वा क्षयो दुर्व्रणश्चापि नून-मभिन्यासरोगादयोऽस्मिन् गदे तु॥१६॥
भिषग्भिः प्रदिष्टा विशेषात्तु चोप-द्रवा एत एभिस्तु मूत्रातिसारी ।
उपेतोऽभ्युपैतीह शीघ्रं विहाय स्वलोकं तु कीनाशलोकं मनुष्यः ॥१७॥

अत्रर्त्तुप्रभावः—

निदाघे प्रजायेत रोगो विशेषा-दयं चापि तत्रैव कुप्येदवश्यम् ।
कदाचिच्च कालेऽतिशीते प्रवृत्तिः प्रदृश्येत लोके क्वचिच्चास्य वैद्यैः॥१८॥
पुरोक्तैरिहैभिर्निमित्तै रथोम-धुमेहोऽपि जायेत रोगोऽतिकृच्छ्रः ।
समासेन चेत्थं तु मूत्रातिसारो-दितं हेतुरूपादिकं सर्वमुक्तम् ॥ १९ ॥

इति माधवनिदानपरिशिष्टे मूत्रातिसारनिदानं समाप्तम् ।

---

## अथ क्लैब्यनिदानम् ।

तत्रादौ क्लैब्यप्रकाराः—

बीजोपघातात्तदनुध्वजोप-घाताज्जरातोऽपि च शुक्रसंक्षयात् ।

इत्थं प्रजायेत चतुर्विधं हि-क्लैब्यं पुराणै ऋषिभिः प्रदिष्टम् ॥ १ ॥

क्लैब्यस्य सामान्यलक्षणम्—

यः स्यादशक्तः सुरते मनुष्यः-स क्लीब उक्तः किल वैद्यवृन्दैः ।
क्लैब्यं तु तद्भाव इहोपदिष्टं-तल्लक्ष्म सामान्यमथो ब्रवीमि ॥ २ ॥
न फेनिलं यस्य भवेद्धि मूत्रं-तथाऽप्सु विष्ठा सततं निमज्जेत् ।
उत्थानशक्त्याऽपि च रेतसा वा-हीनश्च जायेत यदेह मेढ्रः ॥ ३ ॥
क्लीबः स एवाभिमतस्तदा स्यात्-ततः स सङ्कल्पनिमग्नचेताः ।
न यात्यधीनां प्रमदामपि स्वका-मुपस्थशैथिल्यनिमित्ततः स्वयम् ॥ ४ ॥
अथो कदाचिद् यदि याति कुत्रचित्-श्वासार्त्तिमान् स्विन्नतनुस्तदानीम् ।
संकल्पवैफल्ययुतोऽपि मोघ-संचेष्टितः संश्लथलिङ्ग एव ॥ ५ ॥
तथा च निर्बीजतया समन्वितो-भवत्यवश्यं प्रमदासमीपे ।
क्लैब्यस्य सामान्यमदोऽत्र लक्ष्म-प्रभाषितं विस्तरतोऽथ वक्ष्यते ॥ ६ ॥

अथ बीजोपघातजक्लैब्यमाह—

शीतं रूक्षं वाऽल्पमन्नं विरुद्धं-संक्लिष्टं चाजीर्णकालेऽपि भुक्तम् ।
शोकश्चिन्ताऽर्यादिजाताऽपि भीति-स्त्रासो भूरिस्त्रीप्रसङ्गः श्रमश्च ॥ ७ ॥
चाविश्वासोऽथाभिचारो रसादेः-संक्षीणत्वं पञ्चकर्मापचारः ।
वातादीनां चापि वैषम्यमल्पा-हारः स्त्रीणां चारसज्ञत्वमेव ॥ ८ ॥
प्रायेणैभ्यो नुहि बीजोपघातो-जायेतास्मिन् कारणेभ्यो विशेषात् ।
यस्मात्स स्यात्कामिनीष्वल्पहर्ष-श्चाल्पप्राणो दुर्बलः पाण्डुवर्णः ॥ ९ ॥
हृत्कामलातमकपाण्डुगदश्रमाख्यैः-शूलातिसारवमनज्वरकाससंज्ञैः ।
रोगैर्निपीडिततनुश्च भवेन्मनुष्यो-बीजोपघातजनपुंसकताऽभिजुष्टः ॥ १० ॥

ध्वजभङ्गजक्लैब्यस्य कारणमाह—

क्लैब्यं पुनर्ननु पुरातनवैद्यजातै-र्गीतं शृणु त्वमधुना ध्वजभङ्गजातम् ।
अत्यम्बुपानविषमाशनपिष्टभोज्या-लध्वन्नभोजनपरस्य नरस्य नूनम् ११

क्षारं तथा लवणमम्लमथो विरुद्धं-
द्रव्यं त्वनूपभवमांसमपि प्रकामम् ।
दुग्धं दधि प्रतिदिनं त्वदतोऽतिलौल्या-
च्चासात्म्यभोजिन इहातिकृशस्य रोगैः ॥ १२ ॥

कन्यास्वयानिषु पुरातनरोगिणीषु-दुष्टासु दीर्घसमयात् पुरुषैः प्रसङ्गे ।

दुर्गन्धितास्वपि च पुष्पवतीषु दुष्ट-
योनिष्वनङ्गवशतो हि परिस्रुतासु ॥ १३ ॥
एतादृशीषु युवतीषु चतुष्पदासु-प्रायः परं विदधतः सुरतं प्रमोहात् ।
लिङ्गस्य शस्त्रनखदन्तकृतक्षताच्चा-घाताद्धावनत इष्मप्रहारतोऽपि १४
निष्पेषणादपि परिच्युतरेतसः सं-रोधाच्च शूकपरिशीलनतश्च मेढ्रे ।
संजायतेऽधिपुरुषं ध्वजभङ्गनामा-क्लीबत्वसंजननकारणमामयो वै ॥१५॥

ध्वजभङ्गजक्लैब्यस्य लक्षणमाह—

अतः परं यानि च लक्षणानि-भवन्ति नूनं ध्वजभङ्गजानि ।
प्रवच्मि वैद्योत्तमसंमतानी-दानीं शृणु त्वं निखिलानि तानि ॥ १६ ॥

वातजध्वजभङ्गमाह—

मेढ्रेऽतिरुजा स्याद् ध्वजभङ्गे-रागः श्वयथुर्वातसमुत्थे ।

पित्तजध्वजभङ्गमाह—

स्फोटाः प्रखराः स्युर्ननु लिङ्गे-पाकः परमः पित्तसमुत्थे ॥ १७ ॥

कफजध्वजभङ्गमाह—

लिङ्गोपरि मांसस्य समृद्धिः-क्षिप्रं व्रणजन्माऽमितवृद्धिः ।
स्रावश्च पुलाकोदककल्पः-श्यावारुणभः स्याद् यदनल्पः ॥ १८ ॥
वल्मीकुरुते स्फीतो देशः-शिश्ने कठिनः स्यात् सविशेषः ।
कफजे ध्वजभङ्गे किल लक्षण-मेतद्विद्धि निदानविचक्षण ! ॥ १९ ॥

रक्तजध्वजभङ्गमाह—

छर्दिज्वरमूर्च्छाभ्रमतृष्णाः-स्युरिमे रोगाः पुंसि सतृष्णाः ।
लोहितमाविलनीलसवर्णं-वहति हि कृष्णं रक्तमुदीर्णम् ॥ २० ॥
शिश्नव्रणतो यस्य जनस्य-ध्वजभङ्गो रक्तज इह तस्य ।
इति विज्ञेयं साधु सदैव-श्रेष्ठेनायुर्वेदविदेव ॥ २१ ॥

सन्निपातजध्वजभङ्गमाह—

अग्निदग्धसदृशोऽपि च दाहः-सरुजश्चेत्स्यात्कृतसंनाहः ।
वस्तौ सीवन्यामधिवृषणं-वङ्क्षणमध्ये स्वीकृतमरणम् ॥ २२ ॥
पाण्डुर्वा पिच्छिल आस्रावः-कादाचित्कोऽप्येवंभावः ।
मन्दः स्तिमितः श्वयथुर्नूनं-स्रावः स्यादिह संततमूनम् ॥ २३ ॥
चिरकालादपि पाकं गच्छेत्-संत्वरया वा मुक्तिं यच्छेत् ।
जायेरन् क्रिमयोऽप्यधिलिङ्गं-क्लेदि पूतिगन्धीति च लिङ्गम् ॥ २४ ॥

मणिर्विशीर्येतापि च यस्य-मेढ्रं मुष्कौ वाऽथ विशिष्य ।
संनिपातजनितध्वजभङ्ग-विद्यात्तस्योदितमध्यङ्गम् ॥ २५ ॥
कथितं क्लैब्यं ध्वजभङ्गोत्थं-चरकप्रोक्तमिदं हि मयेत्थम् ।
एतं ब्रुवते साङ्गोपाङ्ग-केचित् पञ्चविधं ध्वजभङ्गम् ॥ २६ ॥

जरासम्भवक्लैब्यमाह—

क्लैब्यं जराजातमथो ब्रवीमि त्वं सांप्रतं तच्छृणु सावधानः ।
जघन्यमध्यप्रवरप्रभेदा-दुक्तं मुनीन्द्रैस्त्रिविधं वयोऽत्र ॥ २७ ॥
प्रायस्तत्र प्रवरवयसां मानुषाणामजस्रं-
शुक्रं क्षीणं स्वत इह भवत्यात्मना निर्विकल्पम् ।
तस्मिन् काले यदि न मनुजा वृष्यमासेवमानाः-
स्युस्तेषान्तु ध्रुवमनुदिनं संक्षयाद्वा रसादेः ॥ २८ ॥
वीर्यस्याथेन्द्रियाणामपि तदनु बलस्य क्रमेण क्षयाद्वा·
किञ्चायुः क्षीणताऽतोऽनशनविधिवशात्क्लान्तितोऽपि श्रमाच्च ।
जायेत क्लीबताऽसावधिधरणि जराऽवाप्तजन्मा जनानां
तेनातिक्षीणधातुर्भृशमबलतनुर्विह्वलो वर्णहीनः ।
दीनः सन् पूरुषः स द्रुततरमुदितं वृद्धतातो गदं तु
प्राप्य प्रायो रमण्या सह रमणविधावक्षमः स्यादवश्यम् ॥ २९ ॥

शुक्रक्षयजक्लैब्यमाह—

क्लैब्यं संकथ्यमानं त्वमिह शृणु तुरीयं च शुक्रक्षयोत्थं-
चिन्ताऽऽधिक्याच्च शोकादपि च बहुभयात्क्रोधतो वा मनुष्यः ॥ ३० ॥
उद्वेगादीर्ष्यया वा युवतिजनमुपेयात्समुत्कण्ठया चेत्
किं वा कार्श्यं श्रितः सन्ननुदिनममितं रूक्षमन्नादिजातम् ।
भैषज्यं वा भजेदप्यशनविरहितो दुर्बलः स्यात् प्रकृत्या
किंचासात्म्यान्नपानं समधिकरसनाऽधीनतातः सदाऽद्यात् ॥ ३१ ॥
मुख्यो धातू रसाख्यः स्थित इह हृदये यस्तदीये स आशु-
क्षीयेताथो मनुष्यः स्वयमपि बहुशः क्षीयमाणो भवेद्धि ।
शुक्रान्ता लोहिताद्यास्तदनु ननु परं धातवस्तु क्रमेण-
क्षीयेरंस्तस्य जन्तोर्मतमधिकवरं तत्र शुक्रस्य धाम ॥ ३२ ॥
यः सेवेत ग्राम्यधर्मं प्रहर्षा-च्चित्तस्यातीवाथवा स्त्रीषु नित्यम् ।
क्षीयेताथो तस्य रेतोऽपि नूनं-स प्राप्नोति क्षीणतां सर्वतोऽरम् ॥ ३३ ॥

घोरं व्याधिं चान्ततो वाऽपि मृत्युं प्रायोऽवाप्नोत्येव शुक्रक्षयी सः ।
सार्द्धं हेत्वाद्येन शुक्रक्षयोत्थं क्लैब्यं कृत्स्नं प्रोक्तमित्थं चतुर्द्धा ॥३४॥

मतान्तरमाह—

क्षयोद्भवं च ध्वजभङ्गजातं-क्लैब्यद्वयं चैतदसाध्यमेव ।
समामनन्तीति भिषग्जनेज्याः-केचिन्निदानायनरीतिविज्ञाः ॥ ३५ ॥

उत्पाटनाद्धि वृषणस्य तथैव शेफः-
संछेदतोऽधिगतजन्म नपुंसकत्वम् ।
चासाध्यमेव निगदन्ति निदानविज्ञाः-
पूर्णं कृतं प्रयतनं किल तत्र चोनम् ॥ ३६ ॥

बीजदोषाद्गर्भजक्लैब्यमाह—

मातापित्रोर्बीजदोषात्तथा चा-पुण्यैः कृत्यैः प्राक्तनैर्देहिनोऽस्य ।
गर्भस्थस्यावाप्य दोषा यदाऽरं-नाडी रेतोवाहिनीः शोषयन्ति ॥३७॥
तस्माद्रेतः शुष्कतां तर्हि यातं—जातं बालं पूर्णसर्वाङ्गयुक्तम् ॥
कन्यारूपेणाथवा पुत्ररूपेणा-शक्तं च स्त्रस्त्वकृत्ये प्रकुर्यात् ॥ ३८ ॥

एतेषामसाध्यत्वमाह—

एतत्क्लैब्यं सर्वमेवात्यसाध्यं-प्रोक्तं प्रत्नैर्वैद्यरत्नैर्विशेषात् ।
यद् दोषाणां संनिपातस्य पूर्णा-धिक्यं तत्रालोक्यते लोकमध्ये ॥३९॥

आसेक्यलक्षणमाह—

अत्यल्पवीर्यत्वत एव तात-स्य क्लीब आसेक्यपदाभिधो हि ।
संजायते ना स निजध्वजोत्था-नं प्राप्नुयात् प्राश्य किलात्र शुक्रम् ।४०॥

सौगन्धिकलक्षणमाह—

जायेत यो ना यदि पूतियोना-वजस्रमाघ्राय स शेफसो वै ।
भगस्य वा गन्धमतिप्रहर्ष-योषित्प्रसङ्गे प्रलभेत लोके ॥ ४१ ॥

कुम्भीकलक्षणमाह—

यः स्वे गुदे मैथुनमन्यपुंसा-विधाप्य पुंवत् प्रमदासु सर्वदा ।
यदि प्रवर्त्तेत तदा भिषग्भि-र्ज्ञायेत कुम्भीकनपुंसकः सः ॥ ४२ ॥

ईर्ष्यकलक्षणमाह—

दृष्ट्वा व्यवायं यदि चान्यदीयं-स्वयं भवेद् यः सुरते प्रवृत्तः ।
स ईर्ष्यकक्लीब इह प्रदिष्टो-विशिष्टतः शिष्टतमैर्भिषग्भिः ॥ ४३ ॥

षण्ढलक्षणमाह—

ऋतौ प्रवर्त्तेत यदाऽङ्गनावद्-मोहात् स्त्रियां यः खलु तस्य नूनम् ।
स्त्रीचेष्टिताकारयुतस्तु षण्ढा-भिधः प्रजायेत नपुंसकस्तदा ॥ ४४ ॥
किंवाऽङ्गना काऽपि यदि प्रवर्त्ती-तर्त्तौ रतौ पुंवदपीह पुंसि ।
ततः प्रजायेत सुता क्वचिच्चेत्-पुंचेष्टिताकारयुता भवेत्सा ॥ ४६ ॥

द्विरेतः क्लीबमाह—

समांशभागादुपतप्तशुक्रात्-सशोणिताद् यो नियतः प्रजातः ।
क्लीबो द्विरेताः स तु संज्ञया स्यात्-स्त्रीपुंसलिङ्गयाकृतिचेष्टिताभ्याम् ।

पवनेन्द्रियत्वं लक्षयति—

वायुर्यदा गर्भगतस्य हन्याद्-बालस्य शुक्राशयमत्र दैवात् ।
तदा प्रकुर्यात्पवनेन्द्रियत्वं-नपुंसकत्वप्रदमेव निश्चितम् ॥ ४७ ॥

संस्कारवाहस्य लक्षणमाह—

यदा मारुतः कस्यचित् पूरुषस्य-प्रदुष्टः परं घट्टनं च प्रकुर्वन् ।
प्रदुष्येत्तु शुक्राशयद्वारमद्धा-विदध्यात्तदा तं हि संस्कारवाहम् ॥४८॥

मन्दवेगाल्पहर्षयोर्लक्षणमाह—

यदा मन्दबीजाल्पबीजौ तथा चा-बलौ वाऽप्यहर्षौ भवेतां कदाचित् ।
तदा क्लैब्ययुक्ताविमौ कारणं वै-विकारद्वयस्येति विज्ञेयमत्र ॥४९॥

वक्रिलक्षणमाह—

यदा विदध्याज्जननी तु मैथुने-निजाङ्गजातं विषमं कदाचित् ।
स्याद्बीजदौर्बल्ययुतः पिता चेत्-तदा भवेद्बालजनो हि वक्री ॥ ५० ॥

ईर्ष्यारतेर्लक्षणमाह—

यौ स्त्रीपुंसौ मैथुनं मन्दहर्षौ-कुर्यातां चेदीर्ष्यया चाभिभूतौ ।
तौ तु प्रायो वैद्यवृन्दैर्निमित्तं-संकथ्येतेर्ष्यारतेरेव लोके ॥ ५१ ॥

वातिकषण्ढलक्षणम्—

वायोः पित्तस्यापि दोषाद् यदीयौ-नष्टौ स्यातामण्डकोशौ कदाचिद् ।
रोगज्ञानावाप्तवैशिष्ट्यवैद्यै-राख्यातोऽद्धा वातिकः षण्ढकः सः ॥ ५२ ॥
इत्थं विकृतिविकारा-अष्टावेते नपुंसकाः कथिताः ।
प्राक्तनदुष्कृतिजन्या-स्ते विज्ञेया ध्रुवं विज्ञैः ॥ ५३ ॥

## अथ प्रकारान्तरेण क्लैब्यलक्षणम् ।

क्लैब्यभेदाः—

क्लैब्यं प्रोक्तं सप्तधा यद्भिषग्भि-स्तस्येदानीं वक्ष्यमाणं क्रमेण ।

कृत्स्नं चिह्नं सावधानेन नूनं-रोगज्ञानाभीप्सुनाऽऽकर्णनीयम् ॥ ९४ ॥

तत्र मानसक्लैब्यलक्षणम्—

यद् द्वेषपात्रप्रमदाप्रसङ्गात् पुंसां प्रजायेत नपुंसकत्वम् ।
तन्मानसं नाम सदा सुवैद्यै-राम्नातमद्धाऽऽकलनीयमत्र ॥ ९५ ॥

पित्तजक्लैब्यलक्षणम्—

येऽम्लं कटूष्णमथवा लवणं सदैव-
द्रव्यं नरोऽपरिमितं खलु भक्षयन्ति ।
शुक्रक्षयो भवति पित्तत एव तेषां-
क्लैब्यं ततो निगदितं ननु पित्तजं स्यात् ॥ ९६ ॥

शुक्रक्षयजक्लैब्यलक्षणम्—

नो सेवित्वा वाजीकरणं-नित्यं विदधति रमणीरमणम् ।
शुक्रक्षयजं क्लैब्यं तेषां-भवति नराणामत्र समेषाम् ॥ ९७ ॥

मेढ्ररोगजक्लैब्यलक्षणम्—

अतिशयकालव्यापिगदेन-मेढ्रमध्यसम्प्राप्तभवेन ।
क्लैब्यं जायत इव नौ यस्य-मेढ्ररोगजं ज्ञेयं तस्य ॥९८ ॥

उपघातजक्लैब्यलक्षणम्—

या सिरा भवति वीर्यवाहिनी-लिङ्गनिम्नतलनित्यगेहिनी ।
छिन्नयाऽस्ति मनुजोऽन्वितस्तया-तूपघातजनपुंसकाख्यया ॥९९॥

शुक्रस्तम्भजक्लैब्यलक्षणम्—

देहे यस्य स्यादतुल्यं बलं नौ-तस्य प्रायो ब्रह्मचर्यप्रसङ्गात् ।
प्राप्तक्षोभस्यापि चित्तस्य रोधात्-क्लैब्यं शुक्रस्तम्भहेतूत्थमुक्तम् ।

सहजक्लैब्यलक्षणम्—

आजन्म स्याद् यत्तु नरस्य-क्लैब्यं दुर्विधिवशतो यस्य ।
सहजं नाम च तन्निर्दिष्टं-वैद्यवरैरिह तस्य विशिष्टम् ॥ ६२ ॥

साध्यासाध्यत्वम्—

क्लैब्यमसाध्यं निगदितं-सहजाख्यं तु यथैव ।
ज्ञातव्यं भिषजोपघा-तजमपि चात्र तथैव ॥ ६३ ॥

इति माधवनिदानपरिशिष्टे क्लैब्यनिदानं समाप्तम् ।

---

## अथ शुक्रदोषनिदानम् ।

तत्रादौ तस्य परिचयः—

ततो व्यवायेषु विशेषहर्ष-निमित्ततो बीजमिदं प्रजायते ।
ततो ध्रुवं पौरुषशुक्रमेनद्-वदन्ति वैद्या गदतत्त्ववेदिनः ॥ १ ॥
श्रृणूच्यते तद्विषयेऽधुना मया-यथा ह्यकालोदककीटवह्निभिः ।
प्रदूषितं रोहति नैव बीजं-तथा नृणां शुक्रमपि प्रदुष्टम् ॥ २ ॥

अस्य निदानपूर्विका संप्राप्तिः—

व्यायामतोऽतीव नितान्तमैथुनाव्-सदैव चासात्म्यपदार्थसेवनात् ।
अकालमध्येऽप्ययोनि मैथुनं-प्रकुर्वतां वा त्यजतां रतिक्रियाम् ॥३॥
अतीव रूक्षं लवणं तथाऽम्ल-मुष्णं कषायं बहुशश्च तिक्तम् ।
पदार्थजातं च समश्नतां नृणां-निषेवणाच्चाप्यरसज्ञयोषिताम् ॥ ४ ॥
तथा च शुक्रस्रवणाज्जरातो-ऽथवाऽतिशोकादपि चिन्तनाद् भृशम् ।
किंवाऽग्निदाहादथ शस्त्रघातात्-क्षाराभिपाताच्च भयाद्विशेषात् ॥५॥
क्रोधादविश्वासत एव चाती-सारात्तथा व्याधिसमुत्थकार्श्यात् ।
वेगावरोधादधिकक्षताद्वा-संदूषणाद् धातुगणस्य चापि ॥ ६ ॥
पृथक्पृथग्वा मिलितास्तु दोषा-रेतोवहाः प्राप्य शिराः प्रदुष्टाः ।
द्रुतं च शुक्रं ननु दूषयेयु-र्ब्रवीमि तद्दुष्टिमथो विभागशः ॥ ७ ॥

तत्रादौ शुक्रस्याष्टौ दोषाः—

यत्फेनिलं तनु च रूक्षमतीव वाऽन्य-धातूपसृष्टमवसाद्यपि पूतिगन्धि ।
स्यात् पिच्छिलं प्रकृतितोऽपि विवर्णमद्धा-तद्दुष्टशुक्रमिह वैद्यवरा वदेयुः॥

वातदुष्टशुक्रलक्षणम्—

यत्फेनिलं तनु च रूक्षमथातिकृच्छ्र-
णाल्पं स्रवेत्तदनिलेन विदूषितं स्यात् ।
एवंविधं तु नहि शुक्रमुशन्ति वैद्या
गर्भाय जातु चन योग्यमवन्ध्यमेव ॥ ९ ॥

पित्तदुष्टशुक्रलक्षणम्—

शुक्रं भवेन्नीलमथापि पीत-मत्युष्णमद्धा ननु पूतिगन्धि ।
स्रवेच्च लिङ्गं प्रदहत्तु यत्तव-पित्तेन संदूषितमेव बोध्यम् ॥ १० ॥

कफदुष्टशुक्रलक्षणम्—

भवेत् पिच्छिलं चाधिकं बद्धमार्ग-कफेनैव संदूषितं शुक्रमत्र ।

ब्रुवन्तीत्थमायुर्विदामग्रगण्याः-वरेण्याश्च ये शुक्रदोषज्ञमध्ये ॥ ११ ॥

रक्तान्वितशुक्रलक्षणम्—

अतीवाङ्गनासङ्गमाद्वाऽभिघातात्-क्षताच्चापि संयुक्तमस्रेण नृणाम् ।
अपि प्रायशः संप्रवर्त्तेत शुक्रं-तथा वेगसन्धारणान्मारुतेन ॥ १२ ॥
स्वमार्गऽवरुद्धं च कृच्छ्रेण रेतः-सदा ग्रन्थियुक्तं स्रवेच्चावसादि ।
इति ख्यापिता रेतसोऽष्टौ तु दोषाः-समस्ताः सलक्ष्माण आयुर्विदग्र्यैः॥

शुद्धशुक्रलक्षणम्—

घनं स्निग्धमद्धाऽथ माधुर्ययुक्तं-तथा पिच्छिलं चाविदाहीह शुक्रम् ।
सदा स्फाटिकं वर्णमास्तं तु शुक्रं-विशुद्धं विशेषेण बोध्यं सुवैद्यैः ॥१४॥

इति माधवनिदानपरिशिष्टे शुक्रदोषनिदानं समाप्तम् ।

---

## अथोपान्त्रशोथनिदानम् ।

उपान्त्रशोथस्य परिचयः—

प्रतिमानवं विभिन्ना-मानेनान्त्रपुटेऽन्त्रनित्यलग्ना ।
एका नलिका वर्त्तत-उपान्त्रपदनामिका विदिता ॥ १ ॥
तस्या मानं क्वचन-स्यादङ्गुलिद्वयोन्मिता बहुधाऽपि ।
जातु चनातोऽप्यधिकं-मानं क्वचिदष्टाङ्गुलोन्मितं भवति ॥ २ ॥
अत एव स्थितिरस्या-भवति हि मनुजानुसारिणी नियतम् ।
जाते चात्र प्रदाहे-तीव्रा पीडा प्रजायते नूनम् ॥ ३ ॥

अत्र प्रदाहे कारणम्—

यदाऽऽहारभागोऽत्र किंवाऽन्यदेवा-विशेद्वस्तु काठिन्ययुक्तं कदाचित् ।
तदोपान्त्रमध्ये प्रदाहोऽतिघोरो-ऽनुभूयेत रोगार्दितेनैव नूनम् ॥ ४ ॥

अस्य संप्राप्तिः—

उपान्त्रस्य भित्तौ यदा श्लेष्मणो वा-कलायां प्रकुर्युर्हि कीटाः प्रशोथम् ।
ततो मन्दभावेन वृद्धः स शोथो-व्रणस्य स्वरूपं तु नूनं सुदध्यात् ॥५॥
ततो यानि रूपाण्युपान्त्रस्य शोथे-गदेऽस्त्रोद्भवेयुश्च तानीह कृत्स्नम् ।
नवीनैश्चिकित्साप्रवीणैश्च पाश्चा-त्यदेशोद्भवैर्वर्णितानि ब्रुवेऽत्र ॥ ६ ॥

उपान्त्रशोथस्य स्वरूपम्—

इह श्रोणिदेशे रुजा दक्षिणे स्याद्-भृशं जातु देशे कपर्दाभिधे वा ।
समुत्पद्य पूर्वं ततश्चोदरं वै-परिव्याप्य सा प्रायशश्चाभ्युदेति ॥ ७ ॥

स्थिरा श्रोणिमध्ये पुनः पूर्णरीत्या-ततश्छर्दनाधिक्यमाटोप उग्रः ।
भवेन्मांसपेशीस्थितः स्पर्शनोत्था-रुगुग्राऽप्युपान्त्रस्य नूनं तदानीम् ॥८॥
सदा दक्षिणं सक्थि संकोच्य रोगी स्वपित्यत्र यत्नादभीप्सुः प्रशान्तिम्।
भवेद् द्व्युत्तरं तापमानं ज्वरस्या-निशं ह्येकसंख्यं शतं रोगिदेहे ॥९॥
विबन्धस्य संबन्ध एवात्र भूम्ना प्रदृश्येत वा जातु चिच्चातिसारः ।
उपान्त्रस्थशोथाख्यरोगे बुधानां स्वरूपाभिधानेऽयमित्थं विचारः ॥१०॥

अस्य साध्यत्वादिकम्—

दशायां तु साध्यस्य रोगोऽयमुक्तो मृदुश्च क्रमेण द्व्यहाद्वा त्र्यहाद् नै ।
लभेतापि च न्यूनभावं च तेना-मयी मानवः सौख्यमाप्नोति नूनम्॥११॥
यदा चाक्रमेदेष रोगस्तु शस्त्र-न्नरानस्य कृच्छ्रत्वमूह्यं तदा तु ।
प्रशस्तैः प्रयोगैश्चिकित्साऽतियत्ना-द्विधेयेति सर्वैः सुवैद्यैरिहोक्ता ।
यदा चात्र योगो भवेद्विद्रधेर्वा प्रजायेत विस्फोट एवैतदीयः ।
तथा चोदराच्छादिकायां कलायां भवेच्छोथसंदर्शनं दैवदोषात् ॥१३॥
विना शल्यसंबन्धिनीं सच्चिकित्सा-मसाध्यत्वमस्येति बोध्यं तदा तु।
प्रजातेऽत्र योगे ध्रुवं विद्रधेर्वै-ज्वरादीनि रूपाणि वृद्धान्यपि स्युः ॥१४॥
तथा चोदराच्छादिकायां कलायां-प्रजाते च शोथे भवेत् तापमानम् ।
अपि स्वस्थतुल्यं ज्वरस्याथ शीता-ङ्गताच्छर्दनादीनि चिह्नान्यपि स्युः॥

इति माधवनिदानपरिशिष्टे उपान्त्रशोथनिदानं समाप्तम् ।

---

## अथ चुल्लिकाग्रन्थिरोगनिदानम् ।

अस्य परिचयः—

ग्रीवायां स्वरयन्त्रसंनिधिभवा या चुल्लिकानामिका-
ग्रन्थिः स्यात् किल तत्समुत्थितरसो देहेऽतिलाभप्रदः ।
तस्या द्वौ गदितौ गदौ गदरहस्यज्ञानिभिः कोविदै-
स्तत्राद्यो रसवृद्धिहेतुजगदः संकीर्त्तितः सर्वथा ॥ १ ॥
अप्यन्यो रसहानिहेतुजगदोऽग्रे वर्ण्यते पूर्णत-
स्तत्रादौ रसवृद्धिहेतुजगदो नूनं बहिर्नेत्रयुग् ।
आख्यातो गलगण्डनामक इहैकः श्लैष्मिकार्द्रान्वितः-
शोथो वामनता तथा च गलग-ण्डोऽन्यस्य भेदास्त्रयः ॥२॥
तेष्वन्त्ये गलगण्डनामकगदे सर्वाधिका चुल्लिका-

ग्रन्थेर्वृद्धिरवेक्ष्यतेऽथ सकलानां वर्णनं कृत्स्नशः ।
अप्यस्माभिरिह क्रमेण विधिवत्संपाद्यते सांप्रतं-
तत् प्रीत्या रसवृद्धिहानिजगदानां त्वं समाकर्णय ॥३॥

बहिर्नेत्रगलगण्डनिदानम्—

चिन्ताशोकक्रोधभीतिप्रकर्षा-दुष्णप्रायेष्वेव देशेष्वसौ स्यात् ।
भूम्ना तत्रातीव सभ्येषु चैवं-प्रायः पुंसोऽपेक्षया स्त्रीषु रोगः ॥४॥
आपञ्चदशशरद्भ्यो-विंशतिवर्षाण्यभिव्याप्य ।
जायेत हि बहिर्नेत्र-गलगण्डाख्यो विशेषेण ॥ ५ ॥

अस्य संप्राप्तिः—

अन्त्राद्विषं चापि विलीय पीडो-पेत्योपवृक्कद्वितये निरन्तरम् ।
प्रक्षोभयेन्नन्विह पिङ्गलायाः-सर्वं शिरायाः किल चक्रवालम् ॥६॥
ततो बहिर्नेत्रपदान्वितोऽयं-प्रजायते वै गलगण्डरोगः ।
संप्राप्तिरित्थं गदिता भिषग्भि-र्निदानविद्भिर्बहुशो विविच्य ॥७॥

अस्य स्वरूपम्—

श्रमो मानसः क्षोभ एवं कदाचिद्-रुजा चाधिका जातुचिद्धृत्प्रकम्पः ॥८॥
अथो चुल्लिकाग्रन्थिवृद्धिश्च चक्षु-र्व्युदासस्तथा कामशक्तेश्च ह्रासः ॥
इतीमे विकाराः समुद्भूय नूनं-नरान् पीडयेयुर्गदेऽस्मिन् विशेषात् ।
अतो यत्नतः सद्य एवावलोच्य-क्रिया रोगनाशिन्यवश्यं विधेया ॥९॥

अस्य साध्यासाध्यत्वम्—

दशायां मृदौ चास्य रोगस्य नूनं-भवेत्स्वस्थताऽब्दात्परं सर्वदैव ।
तथा तीव्रतामास्थितायां तु वर्ष-द्वयादेव पञ्चत्वमेतीह रोगी ॥ १० ॥

अत्रारिष्टम्—

बहिर्नेत्रयुक्ते गदेऽस्मिन् यदाग-लगण्डाभिधे रोगिदेहे कदाचित् ।
प्रदृश्येत शक्तिर्व्ययस्याधिकत्वं-तदाऽरिष्टमत्यर्थमद्धाऽत्रगच्छेत् ॥११॥

श्लैष्मिकार्द्रशोथनिदानम् ।

तस्य परिचयः—

गदे श्लैष्मिकार्द्राख्यशोथे विशेषाद्-
भवेच्चुल्लिकाग्रन्थिजातस्य नूनम् ।
रसस्याधिका हीनताऽथो त्वचायां-
तथा श्लेष्मलायां कलायां नरेषु ॥ १२ ॥

अपि स्थूलता गौरवं चेन्द्रलुप्तो-द्भवो मानसस्यापि कायस्य शीघ्रम् ।
क्रियायां भृशं मन्दता मन्दभाग्या-दितीमानि चिह्नानि संक्षेपतः स्युः ॥१

तस्य च कारणम्—

भवेत् कारणं श्लैष्मिकाद्राख्यशोथा-मयस्योद्भवे दृश्यमानं विशेषात् ।
परं चुल्लिकाग्रन्थिनिष्कासनं वै स्वयं नाश एवाथवाऽस्या अकस्माद्॥१
तथा पूरुषापेक्षया स्त्रीषु सप्त-गुणाधिक्यवद् दृश्यते रोगजन्म ।
भिषग्भिश्च पाश्चात्त्यदेशप्रजातै-रिहेति प्रकाशीकृतं लोकमध्ये ॥ १५ ॥

तस्य संप्राप्तेरवतारः—

अन्तःस्था रसकारकाः प्रकथिता ये चुल्लिकाया ध्रवं
भागा ग्रन्थिभवास्त एव हि गदे गच्छन्ति च क्षीणताम् ।
श्लेष्मा यस्त्वगधः स्थितोऽपि च भवेत् सोऽन्यन्तवृद्धिं त्वियात्-
तस्मात्त्वक् प्रविलोक्यते प्रकृतितः स्थूला कला श्लेष्मला ॥१६॥
विधिनाऽनेनोत्पत्ती-रोगस्यास्योपजायते नूनम् ।
इति विज्ञेयं विबुधैः-कथितं विधिवन्मयाऽनूनम् ॥ १७ ॥

तस्य लक्षणम्—

गदारम्भकाले सदैवावसादो-भृशं मानसे भ्रष्टताऽपि स्मृतेश्च ।
ततः सर्वशाखासु पीडोद्भवोऽथो-भवेद् गौरवं वर्त्मनो मण्डलेऽपि ॥१८॥
त्वचा स्थूलभावं गता चातिशुष्का-खरस्पर्शयुक्ता प्रदृश्येत नूनम् ।
विकृत्याऽन्विताः स्थौल्यमाप्ता विशुष्काः-परिभ्रंशिनश्चापि केशा भवेयुः॥१
ततोऽपि प्रवृद्धे गदे रोगिदेहे-गुरुत्वं च मूढत्वमुत्पद्यतेऽद्धा ।
मुखं चायतं स्थूलता दीर्घताऽपि-प्रजायेत दन्तच्छदद्वन्द्वमध्ये ॥ २० ॥
तथा गण्डयो रक्तिमा कर्णपाल्यां-गुरुत्वं च रोम्णां परिक्षीणताऽपि ।
अथ स्थूलता हस्तयोः पादयोश्च-द्विजानां तु पातो मतेर्मन्दता स्यात् २१
भवेदिन्द्रियाणां हृदः क्षीणताऽपि-प्रजाते भृशं दारुणेऽस्मिन् गदे तु ।
ज्वरस्थायितापस्थमानस्य तद्वत्-क्षुधो मन्दभावोऽपि भूम्ना विबन्धः २२
उग्रदशायामस्य गदस्य-बन्ध्यात्वं योषित्सु विशिष्य ।
सर्वत्रैवं बहुशो दृष्टं-तस्माद्वैद्यैरिह निर्दिष्टम् ॥ २३ ॥

अथ वामनरोगनिदानम् ।

तस्य परिचयः—

शरीरमानहीनता-तथाऽतिबुद्धिमन्दता ।
उपस्थसूक्ष्मता भवेत्-सदा गदे तु वामने ॥ २४ ॥

तस्य कारणनिर्देशः—

आजन्मनो भवति यस्य न चुल्लिकाख्या
ग्रन्थिस्तनावथ च तद्भवदुर्बलत्वम्।
तस्मिन्नरे नियमतो ननु वामनत्वं-
तस्मान्निमित्तत इहोदितमेव विद्यात्॥ २५॥

गलगण्डगदेन रोगिणः-कुलबीजस्य च दुष्टता सदा।
अपि देशविशेषताऽस्य वै-जनने स्यात् सहकारि कारणम्॥२६॥

तस्य लक्षणम्—

गदे श्लैष्मिकाद्राख्यशोथे तु यानि-पुरोक्तान्यशेषाणि लक्ष्माणि तानि।
विशेषादिह स्युर्ध्रुवं वामनत्वे ह्यभिव्यक्तिमाप्तानि विद्वन्मतानि॥२७॥
सदा मेदसा गर्भितानीह सर्वा-णि चाङ्गानि ह्रस्वानि नूनं भवेयुः।
पुनश्चात्र वैशिष्ट्यमाभाति यत्तत् समस्तं मया सांप्रतं कथ्यतेऽग्रे॥२८॥
भवेज्जङ्घयोर्वक्रता चापि बाहु-द्वये ऽथोदरे पूर्णरीत्या गुरुत्वम्।
खरस्पर्शयुक्ताऽतिशैथिल्यमाप्ता तथा स्थौल्यवत्यत्र जायेत च त्वक्॥२९॥
प्रशूने च नासापुटे वर्तुलं वै भवेदाननं नासिका चायताऽपि।
ललाटं विशालं तथैवोष्ठयुग्मं सदा पीवरं पीवराऽथो रसज्ञा॥ ३०॥
मतेर्मन्दता प्रायशश्च प्रणाशः-स्मृतेरेवमुग्रत्वमाप्ते गदे तु।
प्रभेदः स्वरस्यात्र मेदःसमुत्थः प्रजोत्पत्तिकारीन्द्रियक्षीणता च॥ ३१॥
तथा जायते कामशक्तेश्च मान्द्यं विशेषाद्गदे वामने नूनमेव।
इतीमानि चिह्नानि पाश्चात्यवैद्यैः समुक्तानि सर्वाणि बोध्यानि लोकैः ३२

गलगण्डविषये कथनम्—

गलगण्डगदो गदितो मुनिभि-र्यत एव ततोऽस्य च रूपमलम्।
अवबोध्यमिहाखिलमुक्तमतो न हि किंचन तुल्यतया तु मया॥३३॥

इति माधवनिदानपरिशिष्टे चुल्लिकाग्रन्थिनिदानं समाप्तम्।

---

## अथोपदंशनिदानम्।

तत्रोपदंशस्य परिचयः।

द्विधोपदंशः प्रथमं तु वैद्यै-रिहोपदिष्टः किल तत्र चाद्यः।
निबोधनीयो ननु दोषहेतुजः-कीटाणुजन्मा तदनु द्वितीयः॥ १॥
तयोस्तु चाद्यो बुधमाधवेन निरूपितः स्वीयनिबन्धमध्ये।
अहन्त्विदानीमत एव चापरं ब्रवीमि जीवाणुजमेव केवलम्॥ २॥

गदोऽगदङ्कारवरैरयं चिर-स्थितिस्वभावः सकलेषु रोगिषु ।
अथापि संसर्गनिमित्तसंभवो भवेऽनुभूतोऽतिभयप्रदो भृशम् ॥ ३ ॥
व्रणाः प्रजायन्त इहाऽप्युपस्थं बहिःस्थलेऽथो रुधिरे गदाणवः ।
प्रविश्य कुर्वन्ति च लक्ष्म नैकं सामान्यतो लक्षणमेतदूह्यम् ॥ ४ ॥

तस्य कारणम्—

"स्पाइटा कीटा-पैलिडा" कीटाः । लोहिते विष्टा-श्चक्षुषाऽदृष्टाः ॥५॥
कारणं शस्य-मामयस्यास्य । कर्षिणीतुल्या-रोगिणे शल्याः ॥ ६ ॥
प्रायेण चाक्रमणमस्य तु मैथुनेन-जायेत च क्वचन संक्रमणैरथान्यैः ।
मर्त्येषु संक्रमणमत्र बहुत्र दृष्टं-किंचैतदामयचिरादितयोस्तु पित्रोः॥७॥
स्वीयासु संततिषु चापि विलोक्यते तत्-तद्वर्णनं च पृथगेव विधास्यतेऽग्रे।

चेद्ग्राम्यधर्मवशतः प्रसरस्तु यस्मिन्
जीवाणवनल्पनिचयस्य विशिष्य च स्यात् ॥ ८ ॥
तत्राऽप्युपस्थमधिबाह्यपदं स्त्रियाश्च-
पुंसो व्रणा नियमतो ह्युपदंशजाः स्युः ।
सामान्यतो निगदितं च निदानमेवं-
सर्वं मयाऽस्य सविशेषमथोच्यतेऽग्रे ॥ ९ ॥

अस्य संप्राप्तिस्तत्र च प्रथमावस्था—

जीवाणवोऽस्य हि गदस्य सदाऽप्युपस्थं-
स्पर्शस्थले विदधति व्रणमत्युदग्रम् ।
पूर्वं भवेत्त्वचि तु वर्त्तुलसूक्ष्मसेला-
नां वृद्धिरत्यधिकतासहिता विशेषात् ॥ १० ॥
संजायते तदनु सौत्रिकतन्तुजाल-
संबर्द्धनं प्रतिदिनं ननु रोगिमध्ये ।
शूना कला भवति रक्तधराऽतिवृत्त-
सेलाभिवृद्धिसहिताऽविरतं नितान्तम् ॥ ११ ॥
हेतोरतो रुधिरधारिधराऽध्वसूक्ष्म-
त्वं जायते तदनु संनिधिवर्त्तिनोऽङ्गा ।
पूर्णाभिवृद्धिरुदिताऽपि भवेल्लसीका-
ग्रन्थिव्रजस्य किल तास्वपि सेलसंस्था ॥ १२ ॥
इत्थं प्रथमाऽवस्था-रोगं विद्वद्भिरस्य गादतेयम् ।

संप्राप्त्या त्वनयैवो-पदंशरोगस्य सर्वथा नूनम् ॥१३॥

अस्य द्वितीयाऽवस्था—

सप्ताहषट्केन ततः प्रयान्ति ग्रन्थिभ्य एवास्य गदाणवोऽस्त्र ।
प्रकुर्वते च त्वचि तत्र संगता-स्ते श्लेष्मलायां हि ततः कलायाम् ॥१४॥
स्फोटांस्तथाऽद्धा पिडिका अवश्यं ततः प्रवृद्धिं विपुलां प्रयाति ।
समस्तकायस्थितिमल्लसीका-ग्रन्थिव्रजोऽस्मिन्नुपदंशरोगे ॥ १५ ॥
पश्चाद्भवेद् ग्रन्थिषु सेलतन्तु-प्रवर्धनं पूर्ववदेव नूनम् ।
गदस्य चेत्थं गदिता द्वितीयाऽ-वस्था भिषग्भिर्बहुशो विविच्य ॥ १६ ॥

अस्य तृतीयाऽवस्था—

श्यानग्रन्थीरूर्ध्वमब्दद्वयात्तु प्रायः कुर्वन्त्यामयस्याणवोऽस्य ।
रोगग्रस्तानां नृणां वै विशिष्ट-भागेष्वेवाथो शरीरस्य मध्ये ॥ १७ ॥
पश्चात्तास्तु ग्रन्थयो मांसपेशी-भिस्तत्रस्था आवृताः सत्य एव ।
सूक्ष्माः स्थूलाः क्षुद्रवृत्तैश्च सेलैः-किं वा सेलैः श्लैष्मिकैः सर्वथैव॥१८॥
नूनं सौत्रैस्तन्तुभिर्वा कृताः स्युः-पश्चात्ताश्च ग्रन्थयो मध्यभागात् ।
संयाताः स्युः शीर्णभावं विशेषात्-पश्चाज्जायेत व्रणत्वं तु तत्र ॥१९॥
तस्मिन् काले रक्तसंवाहिनाड्यो दार्ढ्यं प्राप्ता रज्जुवच्चातिमात्रम् ।
संदृश्यन्ते चातिसंकीर्णमार्गा-इत्थं संकीर्णत्वातिरेकाद् यदा तु ॥२०॥
तासां जायेताथ मस्तिष्कदेशे-भूम्ना मार्गस्यावरुद्धत्वमेव ।
पक्षाघातो मूर्च्छनं वाऽपि मृत्यु-र्नूनं तेनास्मिन् गदे स्यात्तदा तु ॥२१॥
इत्थं तासां हृत्प्रदेशे कदाचि-च्चेत्स्यान्मार्गस्यावरुद्धत्वमद्धा ।
संजायेताशु प्रायशो नै तदा तु-हृत्कार्यस्यातीवरोधोऽप्यकस्मात्॥२२॥
किंवा वा तत्र स्याद् धद्दो विस्तृतिश्च-ह्येवंभूता अन्य एवोपसर्गाः ।
प्राणघ्ना वा दृश्यमाना भवेयुः-प्रोक्ताऽवस्थाऽस्येत्थमेषा तृतीया ॥२३॥

आसूत्तरोत्तरं जीवाणूतामल्पतानिर्देशः—

पुरोदितास्वासु दशासु तूत्तरो-त्तरं भिषग्वृन्दमवेतु चाल्पताम् ।
व्रणेषु जीवाणुगणस्यचामय-प्रदायिनो नूनमिहोपदंशे ॥ २४ ॥

अस्य लक्षणम्—

श्यानाभिधा ग्रन्थय आमयेऽस्मि-स्तनौ भवेयुर्ननु यत्र तत्र ।
वर्णस्तु तासां पललोपमो वा ताम्रोपमो वा परिदृश्यतेऽत्र ॥ २५ ॥
ता उद्भवेयुश्च समानरूपतो-भूयः शरीरस्य च पार्श्वयोः सदा ।

यदा हि बह्वयो मिलिताः परस्परं तदा तु दध्युर्ननु मण्डलाकृतिम् ॥२६॥
मन्दज्वरः स्यादिह कण्ठपाकता-न्यूनत्वमस्त्रस्य तथेन्द्रलुप्तता ।
शिरोव्यथा नक्तमथास्थिमध्ये रुजा सशोथाऽभ्यधिका प्रदृश्यते ॥२७॥
मुखेऽधिनासं रदनच्छदेऽथो श्लेष्मच्छदे योनिगते विशेषात् ।
भवेद् व्रणोत्पत्तिरपीह संशयो विधेय ईषन्न कदाऽपि कोविदैः ॥ २८ ॥
परिस्थितावत्र तदा तृतीया-यां लक्ष्मणां प्रागुपवर्णितानाम् ।
संवर्द्धनं पूर्णतयाऽखिलानां भवेत्तनावप्युपदंशरोगिणाम् ॥ २९ ॥
श्यानाभिधग्रन्थिसमुद्भवोऽस्थिन यकृत्यथो प्लीह्न्यधिफुप्फुसं हृदि ।
संदृश्यते तत्स्फुटनं ततश्च-तथा च तत्र स्फुटितेऽथ रूढे ॥३०॥
समुद्भवेत्सौत्रिकतन्तुता तदा गदेऽत्र योषित्स्वपि गर्भपातः ।
आदौ भवेच्च क्रमतस्ततः स-विलम्बतो दृश्यत एव लोके ॥ ३१ ॥
तदन्वपातश्च ततोऽल्पजीविनः शिशोर्भवेदुद्भव एव सर्वथा ।
ततः क्रमेण ह्युपदंशरोगिण—श्चिरायुषो बालजनस्य जन्म ॥ ३२ ॥
प्रजायते प्रायश एव चौषा-रीतिर्भिषग्भिर्भुवनेऽनुभूता ।
ततस्तु तद्बालगतो ह्यवश्यं सदोपदंशः सहजः स बोध्यः ॥ ३३ ॥

अत्रोपद्रवाः—

संकोचभावो ह्यधिफुप्फुसं वा यकृत्यथो प्लीह्न्यपि पक्षघातः ।
अपस्मृतिर्मूर्च्छनमप्यवश्य-मुन्मत्तता मारुतजा गदाश्च ॥ ३४ ॥
एते यदा ह्यप्युपदंशरोग-मुपद्रवा वैद्यवरैर्विशिष्य ।
संकीर्त्तितास्तेन युतः सदैभी-रोगी लभेतान्तकलोकवासम् ॥ ३५ ॥

इति माधवनिदानपरिशिष्टे उपदंशरोगनिदानं समाप्तम् ।

## अथ सहजोपदंशनिदानम् ।

जीवाणुयोगयुतशोणितशुक्रहेतु-
जातोपदंश उदितः सहजाभिधो हि
शुक्रे तथा रजसि दुष्ट इहोपदंश-
जीवाणुभिः सति तयोरवमेलनाद्वै ॥ १ ॥
जायेत कश्चन कदाचन दैवयोगा-द्गर्भः स नाशमपि नूनमवाप्नुयाच्च ।
किंवा कचित्त्वभिनवेऽप्युपदंशरोगे नैशोद्भवेत्सुकृतितोऽथ च गर्भपातः॥२॥
एवं च जातु चन बालकजन्म चेत् स्यात्

सद्वैद्यवृन्दपरिभाषित एव लोके ।
नूनं बुधैः स सहजेन गदेन चोप-
दंशेन पीडिततनुर्ननु बोधनीयः ॥ ३ ॥
किं चोपदंशवशगा यदि गर्भिणी स्यात्
तत्रोद्भवं त्वधिगतः शिशुरप्यवश्यम् ।
सांसर्गिकेण कलितः स इहोपदंशे-
नाभाषितो बुधजनैरपि वेदनीयः ॥ ४ ॥

अत्र वैशिष्ट्यम्—

अत्रोपदंशे सहजाभिधे बुधै-रवश्यमेतत्सततं विबोध्यम् ।
अथोपदंशस्य च चिह्नजातं न चेज्जनन्यां क्वचिदीक्षितं स्यात् ॥५॥
तदेव चेद्बालशरीरमध्ये जन्मक्षणे लक्षितमेव नूनम् ।
स बालको मातरि तूपदंशे प्रभुर्न संक्रामयितुं भवेत्क्वचित् ॥ ६ ॥
स्यात् किन्तु चान्यत्र निजोपदंश-व्रणस्य संक्रान्तिकृतेऽनिशं क्षमः ।
न संशयस्यावसरोऽत्र देयो यतो भिषग्भिर्बहुशोऽनुभूतः ॥ ७ ॥
एवं च पित्रोरुपदंशिनोः क्वचि-च्चेन्नोपदंशात्ततनुः शिशुः स्यात् ।
तदा स संसर्गभवोपदंश-संक्रान्तिभीत्या रहितो भवेद् ध्रुवम् ॥ ८ ॥
इयं तु रोगाक्रमणप्रभावं सोढुं च शक्तिः किल तत्र बाले ।
संदृश्यमाना वयसि प्रवृद्धे विलीयमाना स्वयमेव वै भवेत् ॥ ९ ॥

सहजोपदंशस्य लक्षणम्—

भवन्ति चास्मिन् सहजोपदंशे गदे शिशौ यान्यपि लक्षणानि ।
प्रदृश्यमानान्यखिलानि तानि ब्रवीम्यहं संश्रृणु साध्विदानीम् ॥ १० ॥
न जातमात्रे हि शिशौ विलोक्यते गदस्य किंचित् क्वचिदेव लक्षणम् ।
परन्तु सप्ताहचतुष्टयात्परं तद्वर्ष्मणि प्राय अनावृतेषु वै ॥ ११ ॥
नासामुखादिष्वखिलेषु चाङ्के-षु पाटलाभाः पिडिका भवेयुः ।
परस्परं ता मिलिता व्रणत्वं प्रसारिणोऽद्धा बहुधा हि दध्युः ॥ १२ ॥
ततस्त्विमां प्राप्य दशामवश्यं संक्षीयमाणाः शिशवः सदेहशाः ।
वलीविशेषाकलिताननाः ध्रुवं विलोक्यमाना इह वै भवेयुः ॥ १३ ॥
पतिष्णुता वाऽथ विरूपता भवे न्नखेषु तेषामपि चेन्द्रलुप्तता ।
मुखोष्ठयोर्वा व्रणयुक्तताऽधिकाऽधिनासिकं वा स्वरयन्त्रमध्ये ॥ १४ ॥
श्लेष्मच्छदेऽपि व्रणिता तयोर्ध्रुवं-

नासाऽस्थिमध्ये गलितिर्विशेषाद् ॥
मिथो विलम्बेन तथाऽस्थिकेन्द्रा-।
णां मेलनं जायत एव नूनम् ॥ १५ ॥

समुद्गमश्चाथ विनाश आशु प्रदृश्यते बालतनौ रदानाम् ।
तथाऽऽश्रितेष्वप्यथ तेषु यौवनं पुरोदिताथा उपदंशजायाः ॥ १६ ॥
प्रायो दशाया बहुशस्तृतीया-या लक्षणानीह भवेयुरेव ।
अथोपदंशीयगदाणुजुष्टयोः पित्रो रजःशुक्र आप्तजन्मसु ॥ १७ ॥
किंचित्प्रवृद्धेषु च तेषु नूनं कार्श्यं प्रदृश्येत च दुर्बलत्वम् ।
तथाऽधिकत्वं वयसोऽपि लक्ष्यते तदीयदेहस्थितलक्षणैर्ध्रुवम् ॥ १८ ॥
नासासेतुश्चिपिटः स्याच्च तेषां साम्यं शीर्षिण प्रायशः संभवेद्धि ।
मूर्ध्नो रन्ध्राण्यत्र नूनं चिरेण-संपूर्णत्वं संभजन्ते विशेषात् ॥ १९ ॥
ऊर्ध्वस्था ये भेदकास्ते रदास्तु तीक्ष्णाः कीलौपम्ययुक्ता भवेयुः ।
चक्राकारा ओष्ठयोः प्रान्तभागे बाह्ये जायेरन् व्रणाः पूर्णरीत्या ॥२०॥
दीर्घास्थ्नां च स्युः शिरांसि प्रकामं स्थूलान्येवं नेत्रयोः शुक्ररोगः ।
जायेताथो शोथ एवोपतारि-कायामन्ये चाक्षिरोगा भवेयुः ॥ २१ ॥
कथनं सहजोपदंशजानां-निखिलानामिह लक्ष्मणां मयेत्थम् ।
विहितं बहुशो भिषग्जनेज्यै-र्गदितानां तु नवैः सुपद्यवृन्दैः ॥२२॥

इति माधवनिदानपरिशिष्टे सहजोपदंशनिदानं समाप्तम् ।

---

## अथ फिरङ्गरोगनिदानम् ।

फिरङ्गाख्यदेशे यतोऽयं गदः स्याद्-विशेषात्ततो भाषितो ज्ञैः फिरङ्गः ।
असौ गन्धरोगः फिरङ्गो जनानां-प्रजायेत नूनं फिरङ्ग्यङ्गसङ्गात् ॥१॥
फिरङ्गिणीसङ्गमतोऽपि जातु-प्रदृश्यते व्याधिसमुद्भवोऽपि ।
अतो मतो वैद्यवरैर्गदोऽसा-वागन्तुजः स्यादिह दोषसंक्रमः ॥ २ ॥
संलक्षयेद्दोषकृतैस्तु चिह्नै-स्तैर्वैद्यवर्योऽमुकदोषजुष्टम् ।
फिरङ्गरोगस्त्रिविधो भिषग्भिः-प्रोक्तस्तु तत्रादिम एव बाह्यः ॥ ३ ॥
आभ्यन्तरः स्यादपि च द्वितीयो-बाह्यान्विताभ्यन्तरसंज्ञकोऽन्त्यः ।
लिङ्गानि चैषामथ संब्रवीमि-क्रमेण कृत्स्नं कथितानि वैद्यैः ॥ ४ ॥
बाह्यः फिरङ्गो गदितस्तु तत्र-विस्फोटतुल्योऽल्परुजाऽन्वितश्च ।
प्रदृश्यते च स्फुटितो भिषग्भिः-प्रायेण लोके व्रणवत् सुसाध्यः ॥५॥

आभ्यन्तरो यः स इहामवातो-पमव्यथां सन्धिषु चापि नूनम् ।
शोथं विशेषाज्जनयेत्ततोऽसौ-ख्यातो भिषग्भिर्ननु कष्टसाध्यः ॥६॥
नासाभङ्गो वह्निमान्द्यं च कार्श्य-शोषश्चास्थ्नां वक्रता वा फिरङ्गे ।
तूपद्रुत्यो भाषिता वै बलस्य-क्षीणत्वं चाऽत्रार्यवैद्यैरिमा वै ॥ ७ ॥
उपद्रवैरेभिरनन्वितो यो-गदः फिरङ्गोऽभिनवो बहिर्भवः ।
भवेत् स साध्योऽथ च कष्टसाध्य-आभ्यन्तरोऽयं बहुशो भिषग्भिः ॥८॥
क्षीणजनस्योपद्रवसहितो-व्याप्तो बहिरन्तःस्थल उदितः ।
भवेदसाध्यः फिरङ्गरोगः-कथयत्येतद्वैद्यपुरोगः ॥ ९ ॥

इति माधवनिदानपरिशिष्टे फिरङ्गरोगनिदानं समाप्तम् ।

---

## अथौपसर्गिकोपदंशनिदानम् ।

विभिन्नजातीयपराङ्गनासु किंवाऽप्यनेकास्ववलासु सङ्गमात् ।
व्रणोऽतिघोरो बहुरुक्प्रकाशकः-स्यात्कष्टदो वै जननेन्द्रिये नृणाम् ॥ १ ॥
पापोपदंशोऽथ विषोपदंशो-यः कीर्त्तितो वैद्यवरैर्विशेषात् ।
स एव प्राचीनतमैर्ध्रुवं चौ-पसर्गिकाख्यो ह्युपदंश उक्तः ॥ २ ॥
संक्रामति प्रायश एष पुंसि स्त्रातश्च तस्यां तत एव रोगः ।
जायेत चापत्यजनेष्वतोऽसौ सुदारुणोऽद्धा कुलजः प्रकीर्त्तितः ॥ ३ ॥
द्विधोपदंशो ननु मुख्य-गौण-विभेदतो वैद्यजनैः प्रदिष्टः ।
मुख्यस्तु तत्रेन्द्रियगो हि दोषो बोध्यः सदा देहगतोऽथ गौणः ॥ ४ ॥

विषोपदंशस्वरूपम्—

आरभ्य यः सौरतकालतस्त्रि-सप्ताहमध्ये जननेन्द्रिये तु ।
प्रजायमानो गदितो व्रणः स विषोपदंशेतिपदेन नूनम् ॥ ५ ॥
अश्चातिदीर्घं समतीत्य कालं नृणां शरीरे सततं स्थितः स्यात् ।
स चातिकृच्छ्रोऽमितदुःखदायी निबोधितः सर्वभिषग्जनेन ॥ ६ ॥

पापोपदंशस्वरूपम्—

पापोपदंशस्य विशेषतः स्याद् द्विधा व्रणोऽद्धा कठिनो मृदुश्च ।
तत्रादिमः कृत्स्नतनुप्रतापी संक्रामकः कृच्छ्रतरः प्रसिद्धः ॥ ७ ॥
नान्यः संक्रामेत्कदाचित्क्वचिच्च कंचिद् देहं नैव संदूषयेद्वा ।
प्रोक्तश्चातोऽत्यन्तसाध्यो भिषग्भि-र्भूम्ना भूमौ नापि संकष्टदायी ॥८॥

मुख्योपदंशरूपम्—

जायन्ते पिडिकाः सदैव पुरुष-स्योपस्थमुण्डे तथा-
चर्मण्यावरके स्त्रियास्तु च भग-द्वारे भगौष्ठेऽपि च ।
याश्च स्युः कठिनाः समन्तत इमा निम्नाश्च मध्ये रस-
स्यात्यन्तं परिवाहिका दृढतमा मूले विदीर्णा मुखे ॥ ९ ॥
ज्वरब्रध्नरोगादिजन्मप्रदात्र्यो विशेषेण मुख्योपदंशे प्रजाताः ।
भवेयुश्च ता इत्थमुक्तान्यशेषा-णिलक्ष्माणि बोध्यानि सर्वैः सुधीभिः १०

गौणोपदंशस्वरूपम्—

प्रशान्ति प्रयातेऽपि मुख्योपदंशे विषं देहसंस्थं विकाराननेकान् ।
प्रकुर्याच्च तेन त्वचायां विकारो-ऽक्षिरोगः क्षयः केशलोम्नामवश्यम् ११

भवेद् ग्रन्थिरोगोऽथ कुष्ठं तथा पी-
नसं चात्र गौणोपदंशे विशेषाद् ।
इतीमानि चिह्नानि वैद्योदितानि
समस्तानि सुज्ञो जनः साधु विद्यात् ॥ १२ ॥

अथ ब्रध्ननिदानम्—

कफस्य च ग्रन्थिषु यत्तु संसृत-पापोपदंशस्य विषं भवेद्धि ।
तत् सज्वरं चामितदुःखदायिनं ब्रध्नाख्यरोगं जनयेदवश्यम् ॥१३॥

इति माधवनिदानपरिशिष्टे ब्रध्नरोगनिदानं समाप्तम् ।

---

## अथ जरारोगनिदानम् ।

पद्भ्यामतीव गमनेन तथाऽतिशीत-
संसेवनेन च कदन्ननिषेवणाच्च ।
वृद्धाङ्गनासततसंगमनाच्च चेतो-
दुःखादुदेति हि जरा समयाच्च नूनम् ॥ १ ॥

जरायाः पूर्वरूपम्—

क्षीणत्वमत्र समुदेति शरीरशक्ते-
रादौ क्रमेण तदनु स्मृतिनाश एव ।
ग्लानिस्ततोऽप्यवयवेषु जनिर्बलीनां-
पालित्यमत्यधिकतो हि शिरोरुहेषु ॥ २ ॥
दन्तस्य चापि शिथिलत्वमथ स्वभावे भूयान् विपर्यय इति प्रतिमानवं वै ।
प्रायो जराऽऽगमनकालत एव पूर्व-मव्यक्तमीक्ष्यत उपयुदितं तु लक्ष्म ॥३॥

जरायाः स्वरूपम्—

प्राग्रूपसंकथितलक्ष्मचयप्रकाशो वह्नेश्च मान्द्यमथ साहसहीनताऽद्धा ।
धैर्यप्रणाश उत्सरप्यति संशयः स्यात् संपादने युवजनोचितकृत्यराशेः ॥४॥

चिन्ता घृणाबहुलता कृशताऽतिरोषो-
वृद्ध्या कफस्य हि गले, नितरां च सक्तिः ।
निष्ठीवनेन सह तस्य च निर्गमो वा
हस्ताङ्घ्रिमध्यगतवेपथुरप्यजस्रम् ॥ ५ ॥
कम्पोऽधिजिह्वमपि च स्खलनं तु मूर्ध्नः·
पादद्वयस्य च धनुर्वदथाग्रतः स्यात् ॥
देहस्य चातिनमनं ह्यधिवृद्धि बाल्यं·
जायेत चातिखरता प्रकृतौ विशेषात् ॥ ६ ॥
वातामयादिकगदा विविधा भवेयुः·
स्वल्पाऽपि शक्तिरवशिष्यत एव सोढुम् ॥
क्लेशं च कं चन कथं चन नैव देहे
कासस्तथा श्वसनमप्यतिविस्मरत्वम् ॥ ७ ॥
दण्डाश्रयेण गमनं रदहीनताऽऽस्ये
चिह्नान्यमूनि गदितानि जरोत्थितानि ॥
वैद्योत्तमैर्बहु विविच्य च यानि तानि
ज्ञेयानि संप्रति जराऽऽकृतिमोप्सुभि र्वैः ॥ ८ ॥
सत्पथ्यसेवनवशादपि यूनि रोगा·
ये यान्ति चाशु सुखसाध्यदशामवश्यम् ॥
ते याप्यतां दधति चात्र हि सच्चिकित्सा-
निःशेषपादसमुपस्थितिकाल एव ॥ ९ ॥

अत्र साध्यतावर्णनम्—

सुसाध्ये तथा कृच्छ्रसाध्ये जराऽऽख्ये-
गदे तन्निवृत्यौ तदुत्पादकानाम् ।
शुभं बर्जनं वै निदानव्रजानां-
प्रयोगोऽपि रासायनः शोभनः स्यात् ॥ १० ॥

इति माधवनिदानपरिशिष्टे जरारोगनिदानं समाप्तम् ।

---

## अथ मस्तिष्कचयापचयनिदानम् ।

तत्र मस्तिष्कचयस्य निदानादिकमाह—

प्रायः शिशूनां क्वचिदेव यूनां-सौभाग्यतोऽजस्रमपि स्वभावात् ।
कपालमत्यर्थमुपैति वृद्धिं-मस्तिष्कवृद्धौ खलु मस्तुलुङ्गः ॥ १ ॥
वृद्धिः समाना यदि मस्तुलुङ्ग-कपालगा स्याद्धि तदा तु तत्र ।
प्रायेण काचिन्न विकारजाता-भीतिर्भिषग्भिः क्वचिदूहनीया ॥ २ ॥
स्वाभाविकी चेदथवाऽस्त्ववस्था-क्वचित्कपालस्य तथा च वृद्धिः ।
मस्तिष्कमध्ये तु तदाऽतिघोरा-उपद्रवाः सन्तु तदीयपीडनात् ॥३॥

उपद्रवानाह—

शिरोऽर्त्तिर्भ्रमो मूर्च्छनं पक्षनाशो-बलस्यापि हानिस्तथाऽऽक्षेपरोगः ।
तथाऽन्तेऽपि मृत्युश्च मस्तिष्कवृद्धा-वुपद्रुत्य एता भिषग्भिर्विभाव्याः ४

मस्तिष्कह्रासमाह—

वृद्धिस्तु मस्तिष्कभवा यथा स्या-द्ध्रासस्तथैवाप्युपजायते हि ।
ह्रासोऽपि मस्तिष्कगतः कपाले प्रवर्द्धमानेऽतिभयङ्करः स्यात् ॥ ५ ॥
ह्रासो यदा स्यात्क्वचिदेकपार्श्वे-मृत्युर्भवेन्नैव तदाऽऽतुरस्य ।
चेन्मस्तुलुङ्गस्य समन्ततो वा-ह्रासस्तदाऽऽश्वस्तु मृतिस्तदीया ॥ ६ ॥
स्यान्मस्तुलुङ्गस्य सदैव वृद्धि-र्ह्रासोऽपि नूनं मरणाय लोके ।
व्यर्थो भवेदत्र यदप्युपाय-स्तथाऽपि रासायनिको विधेयः ॥ ७ ॥

इति माधवनिदानपरिशिष्टे मस्तिष्कचयापचयनिदानं समाप्तम् ।

---

## अथ मस्तिष्करोगनिदानम् ।

शीर्षकम्पस्य निदानम्—

यदा भवेन्मूर्ध्न्यभिघात उच्चकै—स्तदा तदीयानुगुणैः स्वलक्षणैः ।
सुलक्ष्यमाणः खलु शीर्षकम्पा-मयो भवेद्वैद्यजनाभिभाषितः ॥ १ ॥

शीर्षकम्पस्य लक्षणम्—

हृल्लासमूर्च्छे वमनं जडत्वं-चित्तस्य चाञ्चल्यमतीव वेपथुः ।
स्यात्कर्णनादो मलिनास्यता च प्रविस्तृतिर्नेत्रकनीनिकायाः ॥ २ ॥
नाड्यास्तथा स्पन्दनमल्पमात्रं शैत्यं तनोर्दुर्बलताऽधिकाऽपि ।
वाचो विकारः खलु पक्षहानौ-रोगे प्रजायेत हि शीर्षकम्पे ॥ ३ ॥

इति माधवनिदानपरिशिष्टे मस्तिष्ककम्पनिदानं समाप्तम् ।

## अथ शीर्षाम्बुरोगनिदानम् ।

शीर्षाम्बुरोगस्य निदानसंप्राप्त्यादिकमाह—

दुष्टाम्बुपानादतिशैत्यतो वा-ऽऽन्त्रेषु क्रिमेरुद्भवतोऽभिघातात् ।
असात्म्यभोज्याशनतः सुराया-अत्यर्थपानात् पवनप्रदोषात ॥ १ ॥
संचीयते यत्क्रमतः शिरःस्थ-स्नेहस्य भूमौ बहुलं जलं हि ।
तदेव वैद्यैर्गदितस्तु शीर्षा-म्बुरोग एषोऽस्त्वतिदुश्चिकित्स्यः ॥ २ ॥
प्रायः शिशूनामुपजायतेऽसौ-बाल्ये वयस्येव गदो विशेषात् ।
दन्तोद्गमेऽनेकविधाहितानां-निषेवणात्सद्भिषजां मतेन ॥ ३ ॥

शीर्षाम्बुरोगस्य पूर्वरूपम्—

जिह्वा वृता गाढपुरीषताऽथो-दौर्बल्यनिद्राऽधिकते तथा च ।
निःश्वासमध्येऽपि च पूतिगन्धः शीर्षाम्बुरोगेऽस्त्विति पूर्वरूपम् ॥४॥

शीर्षाम्बुरोगस्य लक्षणम्—

तीव्रा व्यथा शिरसि कृष्णपुरीषताऽथो-
मूत्राल्पता श्रुतिगताऽक्षिण च तीक्ष्णता स्यात् ॥
वेगं समाश्रितवती धमनी त्वचायां
रूक्षोष्णते च वमनं विषमाऽक्षितारा ॥ ५ ॥
कण्डू रदच्छदगताऽपि च नासिकाया-
लौहित्यमक्षियुगले च विवर्णताऽऽस्ये ।
आक्षेपकः प्रलपनं खलु पक्ष्मनाशः-
शीर्षाम्बुरोग इति लक्ष्म विभावनीयम् ॥ ६ ॥

इति माधवनिदानपरिशिष्टे शीर्षाम्बुरोगनिदानं समाप्तम् ।

---

## अथ स्नायुकनिदानम् ।

अत्यन्तवृष्ट्यादिनिमित्ततो यदा-सेवेत दुष्टं बहुशो जलं ना ।
शाखासु दोषः कुपितो विसर्पव-च्छोथं तदा तस्य विधाय भिन्द्यात् ॥ १ ॥
सोष्म स्नायुं तत्क्षते तत्र नूनं संशोष्याथो श्वेततन्तूपमं तु ।
वृत्तं जीवं संविदध्याद्बहिश्च-शनैः शनैः निःसरेत् स क्षताच्च ॥ २ ॥
कुप्येच्छेदान्निःसृते तत्र शान्तिः-
शश्वत स्थानेऽन्यत्र तस्योद्भवोऽपि ।
एवंरूपः स्नायुको नाम रोगः-

ख्यातो वीसर्पोदिता च क्रियाऽत्र ॥ ३ ॥
त्रुट्येत बाह्वोर्यदि जङ्घयोर्वा-प्रमादतो यस्य नरस्य जातु ।
तदा तु संकोचमसौ करोति-खञ्जत्वमद्धा क्रमतोऽपि तस्य ॥ ४ ॥

वातादिभेदेन तस्य लक्षणमाह—

श्यावो रूक्षो वायुना चातिपीडा-युक्तो नूनं तन्तुकः स प्रदिष्टः ।
पित्तोनाथो नीलिमोपेतपीतो-ऽवश्यं दाहेनान्वितो दृश्यतेऽपि ॥ ५ ॥
स्थूलः श्वेतः श्लेष्मणा स्याद्गरीयान् रोगो नाम्ना स्नायुको दुष्टरोगः ।
एवं रक्तेनातिदाहान्वितः स-कान्त्या रक्तो द्वन्द्वतो द्वन्द्वलिङ्गः ॥६॥
स स्याद्दोषाणां त्रयेण त्रिलिङ्ग-श्चेत्थं रोगः स्नायुसंज्ञोऽष्टधा तु ।
वैद्यैः प्रोक्तः प्राणहारी विशेषा-न्नानोपद्रुत्यन्वितोऽयं प्रमादात् ॥७॥

इति माधवनिदानपरिशिष्टे स्नायुकरोगनिदानं समाप्तम् ।

---

## अथ योषाऽपस्मारनिदानम् ।

तत्रादौ योषाऽपस्मारविषये भिषजां विचारः—

संबन्धो मानसक्षेत्र-स्य साक्षाद् यत्र नश्यति ।
गतिसंवेदनाक्षेत्र द्वयेन-हि कथं चन ॥ १ ॥
भवेयुर्यत्र चिह्नानि-विचित्राण्यमितान्यपि ।
यं गदं मनसा ध्याये-दाक्रान्ता तेन सा भवेत् ॥ २ ॥
किन्तु वास्तविकी कस्य-चिद्गदस्यात्र न स्थितिः ।
ईदृशोऽसौ गदो योषाऽ-पस्मार इति कथ्यते ॥ ३ ॥
कैश्चिद्भिषग्भिः क्रियते-गणनाऽस्यापतन्त्रके ।
योषासु बहुधोत्पत्त्या-योषाऽपस्मार उच्यते ॥ ४ ॥
किन्तु ये प्रमदातुल्याः कोमलां प्रकृतिं श्रिताः ।
असहिष्णवस्तेष्वपि-प्रेक्ष्यतेऽयं गदः क्वचित् ॥ ५ ॥

योषाऽपस्मारकारणम्—

रक्तक्षयाद्वा बहुशोऽप्यजीर्णा-दुद्वेगतः कोष्ठविबन्धतो वा ।
शोकाच्च भङ्गान्मनसो जरायो-र्विकारतोऽथो रजसो विनाशात् ॥६॥
कुटुम्बिनां निष्ठुरभावतो वा-दौर्बल्यतोऽपि प्रकृतेः कदाचित् ।
पत्युश्च निःस्नेहतया तरुण्या-वैधव्यशोकादथवा विशेषात् ॥ ७ ॥
योषित्सु रोगो यत एष कष्टदः-प्रजायते मानसदेहतापनः ।

चिह्नैरपस्मारसमैः समन्वितः-सुदारुणो नौ भिषगुत्तमैः सदा ॥ ८ ॥
प्रकाशितो भूमितले तु योषा-ऽपस्मारनाम्ना बहुशो गदोऽसौ ।
यावत्प्रवृत्ती रजसः स्त्रियां स्यात्-तावद् गदस्यास्य मतो हि कालः ॥९॥

योषाऽपस्मारसंप्राप्तिवर्णनम्—

पूर्वोदितैर्हेतुभिरेव तावत्-क्षेत्रे भवेद्धि मनसो विकारः ।
तथैव सांवेदनिकात्तथा गतेः-क्षेत्राच्च्युतिर्मानसिकस्य जायते ॥१०॥
क्षेत्रस्य योगस्य ततः क्रमेण-प्राग्रूपरूपोद्भव एव लोके ।
संप्राप्तिरूपेण विशिष्य योषा-ऽपस्माररोगस्य विलोक्यते जनैः ॥११॥

योषाऽपस्मारपूर्वरूपम्—

हृत्पीडनं जृम्भणमङ्गचित्तयोः-सदाऽवसादो भवतीह योषिताम् ॥
अव्यक्तरूपं गदितं तु योषाऽ-पस्मारसंज्ञे हि गदे भिषग्भिः ॥१२॥

योषाऽपस्मारलक्षणम्—

चिह्नान्यनेकानि विचित्ररूपा-ण्यपि प्रजायन्त इवेत्यवेहि ।
ध्यानं भवेद्यस्य गदस्य यत्र-स्यात्तत्र तस्याक्रमणं विशेषात् ॥१३॥
किंवा क्वचिद्रोगिणि यानि चिह्ना-न्याकर्णितान्यप्यवलोकितानि ।
सर्वाणि तानि स्युरिहापि योषा-ऽपस्मारसंज्ञे हि महागदे नौ ॥१४॥
तथाऽपि चिह्नानि विशेषतोऽस्मिन्-स्युर्यानि दृष्टान्यखिलानि तानि ।
विविच्य सौकर्यकृते चिकित्सा-विधावहं वच्मि भिषग्जनानाम् ॥१५॥
वैचित्यमाक्रन्दनरोदने च-भ्रान्तिः प्रलापो मतिविभ्रमश्च ।
द्वेषः सदा ज्योतिषि चोद्धता स्या-दाक्रोश उच्चैर्हसनं च कण्ठे ॥१६॥
श्लेष्माशये पीडनमङ्गमध्ये सदाऽनुभूतिः क्वचन व्यथायाः ।
स्पर्शोत्थशक्तेरपि वृद्धिभावः-श्वासस्य कृच्छ्रत्वमथोदरश्च ॥ १७ ॥
यावद्बलं चानृतगुल्मरोगो-त्पत्तिस्तु मूर्च्छाऽत्र मतिप्रणाशः ।
योषित्सु जायन्त इमानि चिह्ना-न्यनारतं प्रायश एव लोके ॥ १८ ॥

योषाऽपस्मारस्य परिणतिः—

यैः कारणैरेष गदः प्रजायते-प्रयाति शान्तिं विरतेषु तेषु ।
अतः परिस्थित्यनुसारतोऽस्य-स्याल्लोकमध्ये परिणाम एव ॥१९॥
दैवात् कदाचिद् यदि कारणानां-स्थितिर्भवेत्तर्हि गदप्रवृद्धिः ।
एवं निवृत्तेऽपि च हेतुवृन्दे-रोगस्य शान्तिर्नियता प्रदृश्यते ॥२०॥
काचिन्न नारी मृतिमेति रोगे-वयोविवृद्धौ स्वत एष शाम्यति ।

विपर्ययोऽपि प्रकृतेः कदाचि-ज्जायेत नार्या इति यत्र दृश्यते ॥ २१ ॥
ततो गदस्यास्य भवेन्मुहुर्मुहुः-प्रायः सदैवाक्रमणं नृलोके ॥
इत्थं यथामत्यधुना तु योषा-ऽपस्माररोगस्य निदानमुक्तम् ॥२२॥

इति माधवनिदानपरिशिष्टे योषाऽपस्मारनिदानं समाप्तम् ।

## अथ योनिकण्डूनिदानम् ।

योनौ प्रायः श्लेष्मवैगुण्यहेतो-र्रक्तःकोपाद्वस्तिजातेऽर्बुदेऽपि ।
योनिस्थानां संप्रसारात्सिराणां-किं वा नारीणां विकाराज्जरायोः ॥१॥
पुंसा सार्द्धं सर्वदाऽतिप्रसङ्गात्-प्रायः काले चार्त्तवस्य प्रवृत्तेः ।
गर्भस्य प्रागुद्भवे वातलत्वाद्-योनेः कण्डूर्जायते योनिमध्ये ॥ २ ॥
एवं नारीवृद्धतातो विशेषा-त्प्रोक्तं वैद्यैर्योनिकण्डूनिदानम् ॥ ३ ॥

योनिकण्डूलक्षणम्—

योनौ कण्डूर्योनिकण्डूगदे स्यात्-तोदो रौक्ष्यं शुष्कता चापि नूनम् ।
वृद्धिर्व्याधेरुष्णतातोऽपि शैत्या-च्छान्तिर्लोके वैद्यवर्यैः प्रदिष्टा ॥४॥

इति माधवनिदानपरिशिष्टे योनिकण्डूनिदानं समाप्तम् ।

## अथ योन्याक्षेपनिदानम् ।

योनौ यदा विगुणता पवनस्य नूनं-
स्पर्शस्य वृद्धिरमिता तु तदोदिता स्यात् ।
विक्षेपणं भवति योनिमुखे च तस्य-
स्पर्शे व्यथाऽपि गहना प्रमदाजनस्य ॥ १ ॥
एतद्गदेन कलिता न सहेत नारी-
पुंसा कृतं रतिविलासमथो बलाच्चेद् ।
भर्त्ता रमेत हि तया सह तर्हि पीडाऽऽ-
क्रान्ता भवेत्तु तरुणी विकलेन्द्रियाऽद्धा ॥ २ ॥

भगव्यथाभीतिसमन्विता सा-यतो न कान्तं प्रति याति कामिनी ।
ततः प्रियेणातितिरस्कृता क्वचित्-समीहते मर्त्तुमतीव दुःखिता ॥ ३ ॥

योन्याक्षेपस्य लक्षणम्—

योन्याक्षेपे वह्निमान्द्यं तथा चो-द्वेगो निद्राऽल्पत्वमुक्तं क्रमेण ।
वस्तौ दाहः पृष्ठदेशे व्यथा च-स्यात्संचारेऽङ्घ्रिद्वयेनाप्यशक्तिः ॥४॥
उत्साहस्य क्षीणता दुर्बलत्वं-वैवर्ण्यं चेमानि चिह्नानि नूनम् ।

आयुर्वेदज्ञानवृद्धैर्विशेषात्-सद्भिः प्रोक्तानीति विज्ञेयमत्र ॥ ९ ॥

इति माधवनिदानपरिशिष्टे योन्याक्षेपनिदानं समाप्तम् ।

---

## अथ योनिव्यापत्सु बाधकरोगनिदानम् ।

बाधकभेदानाह—

बाधकत्वेन ये लोके-प्रजोत्पत्तौ विशेषतः ।
विख्याता बाधका रोगा-वक्ष्ये ताञ्छृणु सादरम् ॥ १ ॥
प्रथमा रक्तमाद्री स्यात्-षष्ठी नाम्न्यपरा स्मृता ।
उक्तोऽङ्कुरस्तृतीयो नौ-तुर्यो जलकुमारकः ॥ २ ॥

रक्तमाद्रीलक्षणम्—

कट्यां व्यथा यदि भवेदथ नाभिदेश-
स्याधःस्थले स्तनयुगेऽपि च पार्श्वभागे ।
नारी तदा तु कलिता ननु रक्तमाद्री-
दोषेण किंच तत एव फलेन हीना ॥ ३ ॥

मासैकं वा मासयुग्मं कदाचि-च्चेन्नारीणामार्त्तवस्रावयोगः ।
तर्हि स्युस्ता रक्तमाद्रीतिदोषे-णैव ग्रस्तत्वेनहीनाः फलेन ॥४॥

षष्ठीलक्षणम्—

षष्ठीरोगग्रस्तनार्यास्तु,नेत्रे हस्ते ज्वाला स्याद्विशेषाद्भगेऽपि ।
एवं जुष्टं लालयाऽप्यार्त्तवं तु-प्रोक्तं चिह्नं चेति नैद्यैरभिज्ञैः ॥ ५ ॥
स्याच्चेत् षष्ठीबाधकाख्यामयेनो-पेता नारी तर्हि वारद्वयं सा ।
स्नायान्मासे चार्त्तवस्रावयोगाद्योनिस्तस्या रक्तमालिन्ययुक्ता॥६॥

अङ्कुरलक्षणम्—

स्यादुद्वेगो गौरवं चापि देहे-रक्तस्रावश्चाधिकश्चेत्तरुण्याः ।
शूलं नाभेर्निम्नभागे तदा सा-ज्ञेया वैद्यैरङ्कुरेणैव युक्ता ॥ ७ ॥
युक्ताऽङ्कुराख्येन हि बाधकेन-मासत्रयं मासचतुष्टयं वा ।
नारी भवेदप्यृतुना विहीना-कराङ्घ्रिदाहेन युता कृशाङ्गी ॥ ८ ॥

जलकुमारलक्षणम्—

भवतु शूलयुताऽपि च गर्भिणी-यदि हि शुष्कतनुस्तनुरक्तिका ।
प्रकटिता किल तत्फलहीनता-जलकुमारकदोषतया तदा ॥ ९ ॥
जलकुमारकदोषनिपीडिता-कृशतनुः प्रमदा खलुपीवरा ।

बहुदिनं च भवेद्दतुमत्यथो–गुरुकुचा क्षतजाल्पतयाऽन्विता ॥१०॥

इति माधवनिदानपरिशिष्टे योनिव्यापत्सु बाधकरोगनिदानं समाप्तम्।

## अथ जरायुरोगनिदानम्।

तस्य निदानम्—

प्रायेणाधानाद्धि गर्भस्य नैर-न्तर्येणाद्वा स्रावतस्तस्य वाऽपि।
शैत्यात्तद्वच्चार्द्रभूमौ निवासा-द्रोगाद्वा पा-पोपदंशाद्विशेषात् ॥१॥
अत्यर्थं वा मैथुनस्य प्रयोगात् किंवा संगात्पूयमेहादितेन।
संजायेत स्त्रीजने,गौ जरायु-रोगस्तस्याकर्णयापि स्वरूपम् ॥ २ ॥

तस्य स्वरूपम्—

ज्वरोऽग्निमाद्यं त्रिकतोदनं तथा व्यथाऽति निम्नोदरमध्यगाऽपि।
अथोष्णता बस्तिगता गुरुत्वं मुहुर्मुहुर्मूत्रप्रवृत्तिरेव ॥ ३ ॥
भगादपि क्लेदपरिस्रुतिस्तथा मलस्य शश्वच्च प्रवृत्तिरप्यथो।
ततोऽवरोधो मुखनीलिमाऽर्शो-सि दुर्बलत्वं वमथुः शिरोव्यथा ॥४॥
जरायुरोगे विकृतेर्जरायावेवं विधान्येव हि लक्षणानि
आविर्भवेयुर्निखिलाङ्गनास्वा-युर्वेदवित्सज्जनसंमतानि ॥ ५ ॥

इति माधवनिदानपरिशिष्टे जरायुरोगनिदानं समाप्तम्।

## अथाण्डाधाररोगनिदानम्।

तस्य निदानम्—

अतिव्यवायादतिशीतसेवना-त्तथाऽभिघाताद्विषभोजनादपि।
अथो कुपथ्याशनतो गदोऽण्डाधारः प्रजायेत सदाऽङ्गनासु ॥ १ ॥

तस्य लक्षणम्—

उरुव्यथोरूदरमध्यसंस्था-कृच्छ्राल्पते मूत्रगते सरक्तता।
अरोचकत्वं त्वरतिर्बलक्षयो ज्वरश्च हल्लास इहोद्भवेयुः ॥ २ ॥
क्षुद्रा सवेगा धमनी च जिह्वा रक्तोज्ज्वला स्यादनिशं गदिन्याः।
बोध्यानि चिह्नानि भिषग्भिरण्डा-धारामयस्येति सुभाषितानि ॥३॥

इति माधवनिदानपरिशिष्टेऽण्डाधाररोगनिदानं समाप्तम्।

## अथ बन्ध्यारोगनिदानम्।

बन्ध्याङ्गनानां नवधा प्रभेदाः–प्रकीर्त्तिताः प्राक्तनवैद्यवर्यैः।
तत्रादिबन्ध्या प्रथमा तु बोध्या तदुद्भवः स्यादतिपापकर्मभिः ॥१॥

रक्तेन वातेन तथैव पित्ते-न श्लेष्मणा चापि समस्तदोषैः ।
एवं भवेत् पञ्चविधाऽथ तिस्रो भूतेन दैवेन तथाऽभिचाराद् ॥ २ ॥
तथा प्रकारान्तरतोऽपि बन्ध्या चतुर्विधा संकथिता पुनश्च ।
तत्रादिमा सौ गदिता तु गर्भ-स्राविण्यथाऽन्या मृतपुत्रिका च ॥३॥
कन्याप्रसूः स्याच्च मता तृतीया सकृत्प्रसूर्या नियतं चतुर्थी ।
एषैव लोके किल काकबन्ध्या निगद्यते वैद्यजनैरवश्यम् ॥ ४ ॥
यथैव बन्ध्या भवतीह नारी तथैव बन्ध्योऽपि पुमान् प्रकीर्त्तितः ।
तच्छुक्रमध्यस्थितदोषजातैः-सर्वं सुधीभिः स्वधियैव बोध्यम् ॥ ५ ॥

इति माधवनिदानपरिशिष्टे बन्ध्यारोगनिदानं समाप्तम् ॥

---

## अथ सोमरोगनिदानम् ।

अतिप्रसङ्गात्प्रमदाजनाना-मविश्रमादप्यतिसारयोगतः ।
गरप्रयोगादतिशोकतो वा-क्षुभ्येत्स्रवेत्कृत्स्नतनुस्थवारि ॥ १ ॥
स्थानच्युतं तत्प्रतियाति मूत्र-मार्गं स्त्रियास्तेन हि गन्धहीनम् ।
शीतं सितं रुग्रहितं प्रसन्नं-मलेन रिक्तं बहुशः स्रवेत्तत् ॥ २ ॥
ततो न शक्नोति तदीयवेगं सुदुर्बला धारयितुं स्वयं सा ।
क्वचिन्न प्राप्नोति सुखं तथाऽलं मुखं विशुष्यत्यपि तालु तस्याः ॥३॥
त्वाचं रौक्ष्यं चातिमात्रं प्रलापः-शैथिल्यं स्यान्मस्तकस्याथ मूर्च्छा ।
जृम्भा नूनं भक्ष्यभोज्यान्नपेयै-स्तृप्तिं प्रायो न क्वचिद्विन्दतीह ॥४॥

सोमरोगनिरुक्तिः—

शरीरसंधारणतः स्त्रियास्तद् भिषग्भिरुक्तं खलु सोमसंज्ञितम् ।
ततस्तु सोमस्य परिक्षयादिह स्मृतेऽतिकष्टप्रदसोमरोगः ॥ ५ ॥

इति माधवनिदानपरिशिष्टे सोमरोगनिदानं समाप्तम् ।

---

## अथ शैशवसंन्यासनिदानम् ।

संदूषितस्य जननीपयसोऽतिपानाद्-वातातपातिरहिते सततं च शीते ।
दुर्वातदूषिततमे गहनान्धकारे-गेहे शिशोरतिनिवासत एव लोके ॥१॥
दन्तोद्गमामय इह क्रिमिबद्धकोष्ठ-व्याध्योश्च कुक्कुटपदाभिधकासरोगे ।
किंवाऽन्यकष्टदगदे विपुलाभिघाते-मिथ्याऽशनाचरणतो बहुदोषजातैः ॥
पीडयेत कश्चिदवनौ क चनार्भकश्चेत् संन्यासरोग उदितो ननु शैशवादिः ।
प्रायेण बालकजनस्य निपीडकस्तु ज्ञेयो भवेद् गदनिमित्तविदा विशेषात् ॥

शैशवसंन्यासलक्षणम्—

उत्तारमक्षियुगलं सकलेषु गात्रे-ष्वाक्षेपको भवति चेतनताविघातः।
संलक्ष्यते मृत इवापतितः सवालः-संजायतेऽस्य च दृढा खलु दन्तपङ्क्तिः॥
अयं शिशूनां गदितो हि शैशवा-भिधस्तु संन्यासगदोऽतिबाधकः।
चिकित्सितं तत्र विरेचनं भवेद् विशेषतस्तत्क्षणसत्फलप्रदम्॥ ९॥

इति माधवनिदानपरिशिष्टे शैशवसंन्यासनिदानं समाप्तम्।

---

## अथांशुघातनिदानम्।

अंशुघातकारणम्—

भूम्नाऽयमुग्रातपहेतुतः सदा-स्यादंशुघातः खलु दुर्बलादिषु।
उष्णप्रदेशेषु तथैव भूमे-रार्द्रत्वतः स्थैर्यत एव वायोः॥ १॥
उष्णानि कार्याण्यनिशं प्रकुर्व-त्स्वेतत्प्रभावान्मनुजेषु नूनम्।
ग्रीष्मप्रचण्डांशुनिषेविषूपा-नदातपत्रादिमनाश्रितेषु॥ २॥
निर्वातकारालयमास्थितेषु-प्राधान्यतो योदूध्वजनेष्ववश्यम्।
संजायते प्राणिवपुर्विमर्दी-घोरो गदः सद्भिषजां मतेन॥ ३॥

अंशुघातस्य संप्राप्तिः—

भवेच्छरीरस्थित 'सेल'विश्ले-षणं विशेषादतितीव्रतापात्।
ततः समुत्पद्य विषं प्रकुर्या-द्रक्तं विषाक्तं मिलितं च तेन॥ ४॥
किंवा प्रचण्डाः किरणाः खरांशो-र्नूनं सुषुम्णास्थिततापकेन्द्रम्।
संकोपयेयुर्यत एव काले-स्यादंशुघातस्य गदस्य जन्म॥ ५॥

अंशुघातस्य लक्षणम्—

अस्यांशुघातस्य गदस्य वैद्यै-स्तिस्रस्त्ववस्थाः परिकीर्त्तिता वै।
शीताऽभिधाऽऽद्या च ततो द्वितीया-साधारणी चान्तगता हि तीव्रा॥ ६॥
क्लिन्नत्वशीतत्वसमन्विता त्वग्-मूर्च्छा श्रमः स्यादथ दुर्बलत्वम्।
तीव्रत्वमुक्तं ननु नाडिकाया-स्तत्रादिमायां हि रुजो दशायाम्॥ ७॥
अस्यां दशायां नहि जातु मृत्युः-प्रदृश्यते रोगिजनस्य नूनम्।
चिकित्सया जीवनमेव रोगी-हृत्कार्यरोधात्तु लभेत मृत्युम्॥ ८॥
तथा द्वितीयां हि दशां गतस्यां-शुघातिनो मूर्ध्नि भवेद्धि शूलम्।
पीडाऽपि शुष्कत्वमथोष्णता च-त्वचो धमन्याश्चपलत्वमुक्तम्॥ ९॥

क्षीणत्वमेवं बहु दुर्बलत्वं-हृच्छ्वासयोरप्यतिनिश्चयेन।
मूर्च्छाऽऽदिचिह्नानि भवेयुरत्र-प्रायेण पूर्वोक्तदशासमानि ॥१०॥
एवं दशामाप्नुवतोऽन्तिमां च-ज्वरस्तु तीव्रः श्वसनं प्रलापः।
भवेद्गदार्त्तस्य च वर्णनीलता-संन्यासरोगो मरणं तथाऽन्ते ॥११॥

असाध्यलक्षणम्—

करद्वयेऽङ्घ्रिद्वितये च नीलिमा-तथा धमन्याः क्षणलुप्तता च।
विक्षेपणं चावयवस्य रोगिणोऽ-शुवातिनो मृत्युकृते भवन्ति ॥१२॥

इति माधवनिदानपरिशिष्टेऽशुवातरोगनिदानं समाप्तम्।

---

## अथ पारदविकारनिदानम्।

यदा दोषहीनो भवेत् पारदो वै तदा सोऽत्र मृत्युज्वरघ्नः स्मृतः स्यात्।
सतोऽसौ विशुद्धः सुधासंनिभोऽथो विषाभो विशेषादशुद्धः प्रदिष्टः ॥१॥
अयुक्तिप्रयुक्तो रसो रोगमूलं-सुयुक्तिप्रयुक्तो जराव्याधिशूलम्।
यतः संप्रदिष्टो विशिष्टैर्भिषग्भि-स्ततः सेवनीयो यथाविज्ञभिज्ञैः ॥२॥
विधिवदोष रसो ननु सेवितो-हराति नुनियतं सकलामयान्।
अविधिना स हि भक्षित एव वै-भुवि करोति गदान् विविधानिमान् ३
नासाभङ्गः पीनसो दन्तपातो-नेत्रास्योत्थो रोगजातो विसर्पः।
कोठः कण्डूर्मस्तके चातिपीडा-त्वग्वैवर्ण्यं नासिकाऽऽदौ क्षतञ्च ॥४॥
पीडायुक्तग्रन्थिवच्छोथकाठि-न्यं जायेताप्यण्डकोशद्वये च।
पक्षाघातो ग्रन्थिवातोऽस्थिदाहो-ऽप्युग्रो जाड्यं चापि चेतोविकारः ॥५॥
भगन्दरो नैकविधानि कुष्ठा-पदंशचिह्नानि शरीरमध्ये।
तथाऽपरे कृच्छ्रतमा गदाः स्यु-र्यथोचितं भेषजमत्र कल्प्यम् ॥६॥

इति माधवनिदानपरिशिष्टे पारदविकारनिदानं समाप्तम्।

---

## अथ शीतलानिदानम्।

देव्या शीतलया-क्रान्ता मसूर्यः शीतला बहिः।
ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः ॥ १ ॥
ताश्च सप्तविधाः ख्यातास्तासां भेदान् प्रचक्ष्महे।
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ॥ २ ॥
सप्ताहान्निःसरत्येव सप्ताहात् पूर्णतां व्रजेत्।
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ॥ ३ ॥

वातश्लेष्मासमुद्भूता कोद्रवा कोद्रवाकृतिः ।
तां कश्चित् प्राह पक्केति सा तु पाकं न गच्छति ॥४॥
जलशूकवदङ्गानि सा विध्यति विशेषतः ।
सप्ताहाद्वा दशाहाद्वा शान्तिं याति विनौषधम् ॥५॥
ऊष्मणा तूष्मजारूपा सकण्डूः स्पर्शनप्रिया ।
नाम्ना पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम् ॥६॥
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी ।
नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ॥ ७ ॥
किञ्चिदूष्मनिमित्तेन जायते राजिकाऽऽकृतिः ।
एषा भवति बालानां सुखं शुष्यति च स्वयम् ॥ ८ ॥
कोठवज्जायते षष्ठी लोहितोन्नतमण्डला ।
ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम् ॥ ९ ॥
स्फोटानां मेलनादेषा बहुस्फोटाऽपि दृश्यते ।
एकस्फोटा च कृष्णा च बोद्धव्या चर्मजाऽभिधा ॥ १० ॥

इति माधवनिदानपरिशिष्टे शीतलानिदानं समाप्तम् ।

---

## अथाशीतिर्वातजरोगनामानि ।

ये चाशीतिर्वातजाता मुनीन्द्रैः ख्याता रोगास्तान् समस्तान् ब्रवीमि ।
[१]बाह्यायाम-[२]श्चान्तरायाम-[३]ऊरु-स्तम्भो-[४]जिह्वास्तम्भ [५]उद्गार एव ॥ १ ॥
[६]खल्ली-[७]पक्षाघात-[८]आक्षेपकोऽथो-[९]मन्यास्तम्भः [१०]पङ्गुता [११]क्रोष्टुशीर्षः ।
[१२]प्रत्यष्ठीलाऽ-[१३]ष्ठीलिका [१४]वामनत्वं-[१५]कम्पः [१६]कार्श्यं [१७]श्यावता च [१८]प्रलापः ॥
[१९]निद्रानाशः [२०]स्वेदनाशोऽपि [२१]रेतो-नाशो [२२]रेतोऽतिप्रवृत्तिश्च [२३]तोदः ।
[२४]कार्श्यं शुक्रस्यापि [२५]काठिन्य-[२६]माध्मा-नं-[२७]भीरुत्वं [२८]दुर्बलत्वं च [२९]कण्डूः ॥
[३०]प्रत्याध्मानं [३१]शीतता [३२]रोमहर्षः-[३३]स्तम्भो [३४]विश्वाची [३५]हनुस्तम्भ एव ।
[३६]सङ्कोचोऽथो [३७]गृध्रसी [३८]पादहर्षो [३९]मूकत्वं चातीव [४०]जृम्भा तथा च ॥
[४१]शिरोग्रहश्चापि [४२]कटीग्रहोऽ[४३]दिता तथाऽ[४४]पतानोऽथ [४५]कलायखञ्जता ।
[४६]बलक्षयश्चा[४७]प्यनवस्थितात्मता-[४८]रसाज्ञता [४९]मिन्मिनताऽथ [५०]कुब्जता ॥

[५१]शब्दाज्ञता [५२]चाप्यपतन्त्रको [५३]व्रणा-यामः [५४]प्रसुप्ति[५५]र्विरसास्यता च ।
[५६]दृशोः क्षयो [५७]विड्ग्रह एव [५८]कल्लता-[५९]ऽपबाहुकश्चापि [६०]कषायवक्त्रता ॥
[६१]गन्धाज्ञत्वं [६२]क्षिप्रमूत्रत्व-[६३]मन्न-[६४]शूलं-[६५]तूनी चाङ्गपीडा[६६]ऽङ्गभङ्गः ।
[६७]पार्श्वे शूलं [६८]वातकण्टो[६९]ऽङ्गभेदः-[७०]शोषश्चाङ्ग[७१]विभ्रंश एव ॥

[७२]दण्डापतानको [७३]वात-प्रवृत्तिश्चा[७४]न्त्रकूजनम्
[७५]सिराणां पूरणं तद्वत् [७६]स्फुरणं [७७]बद्ध-विट्कता ॥
[७८]खञ्जता [७९]रूक्षता-चैव [८०]प्रतितूनी पुरातनैः ।
भिषग्भिर्गदिता एते ज्ञेया रोगा तु कोविदैः ॥

इति माधवनिदानपरिशिष्टे अशीतिवातरोगनामानि ।

---

## अथ चत्वारिंशत्पित्तरोगनामानि ।

चत्वारिंशत्संख्यकाः पित्तजाताः-ख्याता रोगा ये मुनीन्द्रैः पुराणैः ।
संकथ्यन्ते चाधुना सावधानं श्रोतव्यास्तेऽवश्यमेवाप्यभिज्ञैः ॥१॥
[१]उष्णाङ्गत्वं [२]कण्ठशोषो [३]विदाहो-[४]धूमोद्गारः [५]कान्तिहानिः [६]क्लमश्च ।
[७]तिक्तास्यत्वं चाल्प[८]शुक्रत्वमम्ल-[९]वक्त्रत्वं चाप्यास्य[१०]शोषोऽङ्ग[११]पाकः ॥२॥
[१२]स्वेदस्रावो [१३]लोहगन्धास्यता चा-[१४]तृप्तिश्चाथो [१५]पीतविट्कत्वमेव ।
[१६]रक्तद्रावोऽथा[१७]रतिः [१८]पीतमूत्र-त्वं [१९]दौर्गन्ध्यं [२०]पीतगात्रत्वमद्धा ॥३॥
[२१]उष्णोच्छ्वासत्वं च [२२]कोपोऽथ [२३]गात्र-सादः [२४]शीतेच्छाऽ[२५]ल्पनिद्रत्वमेव ।
[२६]तेजोद्वेषो [२७]भिन्नविट्कत्व[२८]मान्ध्यं-[२९]मूत्रस्योष्णत्वं [३०]मलस्योष्णता च॥४॥

[३१]मतिभ्रमो[३२]ऽङ्गदरणं-तथा [३३]पीतावलोकनम् ।
[३४]तमसो दर्शनं [३५]पीत-नखता [३६]पीतदन्तता ॥ ५ ॥
[३७]निःसरत्वं तथा [३८]पीत-मण्डलानां च दर्शनम् ।
अथो [३९]हरित[४०]वर्णत्वं पीतनेत्रत्वमित्यलम् ॥ ६ ॥

इति श्रीमाधवनिधानपरिशिष्टे चत्वारिंशत् पित्तरोगनामानि ।

---

## अथ विंशतिश्लेष्मरोगनामानि ।

ये विंशतिः श्लेष्मसमुद्भवा गदा उदीरिता रोगनिदानसंविदा ।
त एव संप्रत्यखिला विशेषत-स्त्वाकर्णनीया ननु सावधानतः ॥१॥

मुखमाधुर्यं[1] शैत्यं[2] गौरवमतिनिद्रता[3][4] तन्द्रा[5] ।
उष्णेच्छा[6] मुखलेपः[7] प्रसेकर्ता[8] तिक्तकामिता[9] चापि ॥
श्वेतावलोकनं[10] चा-चैतन्यं[11] मन्दबुद्धिता[12]ऽतृप्तिः[13] ।
श्वेताङ्गवर्णता[14]ऽथो बहुमूत्रत्वं[15] मलाधिता[16] ॥
आलस्यं[17] विण्मूत्र-श्वेतत्वं[18] चापि चेतनाविरहः[19] ।
घर्घरवाक्यत्वं[20] च-ज्ञेया एते गदाः कफजाः ॥

इति माधवनिदानपरिशिष्टे कफजा रोगाः ।

इति माधवनिदाने नव्यरोगनिदानपरिशिष्टं समाप्तम् ।

---

## अथ ग्रन्थकारपरिचयः ।

इत्थं यथामति यथाश्रुति ह्यद्यपद्यै-रायुर्विदां मतमवेक्ष्य परीक्षितं सत् ।
प्रायो निदानमखिलं सकलैस्तदङ्गैः सार्द्धं सविध्यभिहितं नवरोगराशेः १
श्रीराजमोहनितया प्रथितेन पृथ्व्यां-श्रीबान्धवीतनयतां श्रयताऽपि काशीम्
श्रीमत्त्रिपाठिमणि-रामचरित्रशर्म-पोष्यात्मजेन जनताहिततत्परेण ॥२॥
गोस्वामिवर्यनिगमागमपारदृश्व-दामोदराङ्घ्रिरसिकेन च गौतमेन ।
श्रीगौरचन्द्रचरणाश्रयणप्रियेण सत्पङ्क्तिपावनपदाह्वमहीसुरेण ॥ ३ ॥
रासेश्वरीतनयया प्रिययाऽन्वितेन-संपादकेन बहुवैद्यकपुस्तकानाम् ।
विद्याऽर्थिसङ्घसततोन्नतिवर्त्मगेन-विद्याऽर्थिजीवनमनारतमाश्रितेन ॥४॥
बस्तीनरेश्वरसमर्पितभूमिसंस्थ-मिश्रौलियाऽऽवसथवासिषु वैष्णवेन ।
आयुर्विदागमविचारचिराध्वगेन-श्रीब्रह्मशंकरपदाभिधपण्डितेन ॥५॥

---

२........

## चक्रदत्तः ।

**भावार्थसन्दीपिनी विस्तृत भा. टी. परिशिष्ट सहितः ।**

वैद्यों के सुविधा के लिये इसके **प्रथम परिशिष्ट में**–चिकित्सोपयोगी पञ्चलक्षण-निदान-विशद नाडीपरीक्षा-डाक्टरीमतानुसार मूत्रपरीक्षा, मल-शब्द-स्पर्श-रूप-नेत्र-परीक्षा-मृत्यु सामान्य लक्षण-मुख तथा जिह्वा परीक्षा-वातादिकों के प्रकोप हेतु-काल आदि का वर्णन तथा मानपरिभाषा-ओषधि ग्रहण काल आदि पञ्चकषाय वर्णन एवं **द्वितीय परिशिष्ट में**–क्रम से प्रत्येक रोगों का पथ्यापथ्य भी दिया गया है ६)

## शार्ङ्गधरसंहिता

**वैज्ञानिक विमर्शोपेत 'सुबोधिनी' हिन्दी टीका'लक्ष्मी'–नामक टिप्पनी तथा पथ्यापथ्यादि विविधपरिशिष्ट सहित ।**

इस अभिनव संस्करणके 'सुबोधिनी' टीका व लक्ष्मी टिप्पनी में विमर्श द्वारा ग्रन्थके कठिन भावोंको वैज्ञानिक ढंगसे सरलता पूर्वक स्पष्ट कर दिया गया है एवं रोगगणनाध्यायमें प्रत्येक रोगोंका निदान, लक्षण आदि का वर्णन करके अन्त के परिशिष्टों में ग्रन्थानुक्त रोगों का भी निदान, लक्षण, चिकित्सा तथा प्रत्येक रोगों का पथ्यापथ्य निर्देश एवं अकारादिक्रमसे प्रत्येक रोगोंके एकत्र स्वरस, चूर्ण, आसव, घृत, तैल रस, लेप आदि की सूची भी दी गयी है। ३॥)

## अभिनव–बूटीदर्पण–सचित्र ।

आप लोगों को यह जान कर अत्यन्त हर्ष होगा कि लाहौर से बूटीदर्पण जो सात वर्ष तक प्रकाशित होकर लुप्त हो गया था उसका पुनरुद्धार नये सज धज के साथ अब अभिनव–बूटीदर्पण के नाम से उत्तम ग्लेज कागज़ व सुन्दर स्पष्ट सहज में पहचानने योग्य **चित्रों** के साथ हमारे यहां से भारत विख्यात 'रूपनिघण्टुकार' श्रीयुत **रूपलालजी** वैद्य के सम्पादकत्व में प्रकाशित हो गया है। इसमें प्रथम के प्रकाशित जड़ी बूटियों के विषय भली भांति परिमार्जित करके अन्य सन्दिग्ध बूटियों पर भी अच्छा प्रकाश डाला गया है। चिकित्सकों, विद्यार्थियों आदि सभी लोगोंके बड़े कामका ग्रन्थ है ६)

---

**प्राप्तिस्थानम्–चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।**

# सुश्रुतसंहिता-शारीरस्थानम्

## नवीन-वैज्ञानिक-'प्रभा'-'दर्पण' व्याख्याद्वयोपेतम् ।

अभीतक "शारीरस्थान" की कोई ऐसी उपयुक्त व्याख्या न थी जो अल्प मूल्य में महद्गुणशालिनी हो। इसी उद्देश्य की पूर्ति के लिये हमने इसकी 'प्रभा' तथा 'दर्पण' नाम की श्रेयस्कर दो व्याख्यायें प्रकाशित की है। परीक्षोपयोगी आवश्यक विषयों का-समावेश भी निराले ढंगसे किया गया है। सर्वत्र 'प्रभा' व्याख्या से सूत्रों के वास्तविक अर्थों को तथा 'दर्पण' से विशेष २ अर्थों को पूर्वापर रीति से दर्शाया गया है, एवं शारीरिक शब्दों के पर्याय देदेने से तथा प्रति अध्याय के अन्त में प्रश्नसंग्रह के रखने से इस संस्करण की उपादेयता अति सौन्दर्यान्वित हो गई है १॥।)

# सुश्रुतसंहिता

## अभिनव 'सुधा' संस्कृत टीका सहित ।

छात्रों के कष्ट को दूर करने के लिये **डल्हण टीका** के आधारपर **सुधा** नाम की संस्कृत टीका युक्त तथा विशुद्ध पाठों से विभूषित सुश्रुतसंहिता का यह परमोपयोगी शुद्ध संस्करण प्रकाशित होकर आपके सम्मुख सेवार्थ उपस्थित है। इस **सुधाटीका** में डल्हण टीका की तथा आधुनिक **डाक्टरीमतानुसार** सभी आवश्यक बातों का सरल में आविष्कार किया गया है। कोई भी विषय छूटने नहीं पाये हैं। ग्रन्थके अन्त में यन्त्रों एवं शस्त्रों के चित्रों का परिचय भी विद्यार्थियों के सुविधा के लिये उन्हीं के साथ साथ दिया है। मेरा तो दृढ़ विश्वास है कि सुबोध विद्यार्थियों को अब किसी भी मूल अथवा डल्हण टीका तक की भी आवश्यकता न होगी ५)

---